मेघं मेघशब्दवाच्यम् अमृतेश्वरयुग्मं निषेवे नितरां चिन्तयामि । अत्र मेघशब्दस्य 'मिह सेचने' इति धातोः पुंसि सञ्ज्ञायां घः प्रायेणेति घ प्रत्ययस्य हस्य घत्वे निष्पन्नत्वात् सेचनप्रधानपरमामृतरूपामृतेश्वरद्वन्द्वता ध्वन्यते । अत्र श्लोके नामतोऽनुक्तावपि अमृतदम्पती सूचितौ ॥ ३९ ॥

**तवाधारे मूले सह समयया लास्यपरया,**
**नवात्मानं मन्ये नवरसमहाताण्डवनटम् ।**
**उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया**
**सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४० ॥**

अत्र षट्सु षष्ठेन श्लोकेन त्रिपुरसुन्दर्यादि षट्पञ्चाशद्देवताधिष्ठिततत्समयसङ्ख्यपत्रविचित्रभूमिमयकमलनित्याधिवासमूलाधिष्ठानदेवते लास्यताण्डवभेदभिन्नगान्धर्ववेदोत्पत्तिभूते समयाम्बा महानटेश्वराख्ये दम्पती परामृशति । हे परमेश्वरि ! तव मूलाख्ये अघोरप्रथमचक्रे लास्यनृत्यविशेषयुक्तया समयया साम्वयाम्बया सह नवरसमहाताण्डवनटं नवधा रस्यते शब्द्यते 'रस शब्दे' इति धातोः नव रसा नव तालाः तैर्युक्तस्य महाताण्डवस्य नटम्, के ते नव ताला ये पूर्वं कादिहादिमन्त्रसमष्ट्या स्वाहा लक्ष्मीखण्डेन नवात्मानकूटो महामन्त्रोऽभिहितः । तन्मन्त्रमेव तेन पाठ्या तेन दीर्घह्रस्वप्लुतादिगुरुलघुयुक्तं तालं कृत्वा स्वयमेवोच्चरन् स्वयमेव नटति महेश्वरः तेन पाटो नाम सङ्गीतशास्त्रे तं तनातनेति श्लोकस्य वा मन्त्रस्य वा तकारनकाराभ्यामेव च वर्णाभ्यां कदाचिद् रेफेन युक्ततत्तत्स्वरसंस्थानं कथनमेव तत्र तालाः परब्रह्मस्वरूपा नवखण्डात्मका उच्यन्ते—तनेति नत्रि तन तन तत्रि तन तत्रि तन तत नत नत्रि तन तत्रि तन तत्रि तनमिति नवखण्डालाः। तालः तलप्रतिष्ठायामिति धातोर्धत्रिस्मृतः इति निर्वचनात् सर्वलोकानां सर्वविद्यानां सर्वसङ्गीतानां प्रतिष्ठाभूताः एते तेष्वेव तालेषु प्रतिष्ठितयोर्भगवतोर्महानटीमहानटयोर्जगच्छान्तये नटनम् । नवात्मानमिति यद्यपि शिवस्य विशेषणं तथापि उभयोरेव महामन्त्रस्वरूपयोस्तथा विशेषणं द्रष्टव्यम् । नवात्मिकया समयया सहेति शेषः । नवरसशब्देन काव्यनाटकप्रसिद्धा शृङ्गारादयो रसा उच्यन्ते इति केचिद्व्याचक्षते, अतिप्रकटतया फल्गुतया नाहतमस्माभिः । तावेव महानटौ द्वितीयार्धेन विशिनष्टि एताभ्यामुभाभ्यां महानटीमहानटाभ्याम् उभयविधमुद्दिश्य सृष्टिपालनाख्यं कर्मद्वयमुद्दिश्य दयया करुणया सनाथाभ्यां सद्भ्यां प्रागुक्ताभ्यां देवताभ्यां करुणभूताभ्यां जगदिदं त्रिभुवनमेतत् जनकजननीमत् मातापितृयुक्तम् जज्ञे जातं पालने दयावत्त्वमुचितम् । जनन्याः कथं दयावत्त्वं शरीराभावेन भोगापवर्गाभावात् अशरीराणामात्मनाम् अनानन्दरूपत्वात् शरीरसम्पादनद्वारा आनन्दप्रदानन्दमयया विना न भवतीति सृष्टावपि दया सम्बन्धः ॥ ४० ॥

इति श्रीपदवाक्यप्रमाणपारीणश्रीमहाभाष्यभट्टारविन्दलोचनाचार्यपुत्रस्य महामहोपाध्यायस्य वात्स्यडिण्डिमरामकृतौ आनन्दलहरीभाष्यालोचने प्रथमसुन्मीलनम् ।

श्रीमहात्रिपुरसुन्दर्यै नमः ।

**श्री गुरवे नमः**

आगमार्थप्रधानत्वादसुबोधो शरीरितः ।
गुरोः कटाक्षविक्षेपादंशोऽन्यः सम्प्रकाशते ॥

**गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं,**
**किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः ।**
**समीडे[1] यच्छायाच्छुरणशवलं चन्द्रशकलम्,**
**धनुः सौनासीरं किमिदमिति वध्नाति[2] धिषणाम् ॥ ४१ ॥**

एवमुक्तप्रकारेण सर्वविद्यानिरूपितस्वरूपायाः श्रीश्रीमहाभट्टारिकाया मोक्षपथपक्षपातिप्रेक्षावज्जनैकसुगमखण्डज्योतिर्ध्यानं कर्तुमक्षमाणानां भोगार्थिनामल्पधियां सकलध्यानमेव पाटलवर्णं पाशाङ्कुशधनुर्बाणधरं पञ्चब्रह्ममञ्चगतं कामेश्वराङ्कपर्यङ्कोपविष्टसर्वाभरणभूषितं च वक्तव्यम्, तच्च प्रत्यङ्गवर्णनं विना भवत्याः सुखेन प्राप्तुमशक्यमिति कृत्वा केशादिपादान्तमवयववर्णनमारभते **गतैरित्यादिना** । माणिक्यं रत्नभावं गतैः प्राप्तैः गगनमणिभिर्द्वादशादित्यैः मित्रवरुणधात्रर्यमअंशुभगेन्द्रविवस्वत्त्वष्टृपूषासवितृविष्णुनामभिः सान्द्रघटितं विश्वकर्मणा सुश्लिष्टतया सम्पादितं हैमं हैमप्रधानं ते किरीटं मुकुटं हे हिमगिरिसुते शैलराजनन्दिनि ? कः कीर्तयितुं वर्णयितुं शक्तः न कोपीत्यर्थः । तदेव विशिनष्टि—यच्छायाच्छुरणशवलं यस्य मुकुटस्य छायाच्छुरणेन कान्तिविलेपेन शवलं नानावर्णं सत् चन्द्रशकलं शशाङ्कभित्तं कर्तृ सौनासीरं सुनासीरसम्बन्धि "वृद्धश्रवाः सुनासीर" इत्यमरः । धनुः कार्मुकं किमेतदिति धिषणां बुद्धिं वध्नाति सम्पादयति तन्मुकुटो वर्णयतु इति सम्बन्धः ॥ ४१ ॥

**धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं,**
**घनस्निग्धश्लक्ष्णं चिकुरनिकुरम्बं तव शिवे ।**
**यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो,**
**वसन्त्यस्मिन् मन्ये वलमथनवाटीविटपिनाम् ॥ ४२ ॥**

**तुलितदलितेन्दीवरवनम्**—तुलितम् उपमितम्, दलितेन्दीवरवनं विकसितनीलोत्पलकाननम् येन तत्तथोक्तम्, घनस्निग्धश्लक्ष्णम्—घनम् निबिडम्, स्निग्धम् चिक्कणम्, श्लक्ष्णम् सुखस्पर्शम्, तव भवत्या यत् चिकुरनिकुरम्बम्—कचवृन्दम्, हे शिवे ! नः अस्माकम्, ध्वान्तम् अज्ञानतिमिरम्, धुनोतु दूरीकरोतु । "धूञ् कम्पने" इति धातुः स्वादिकः, "स्वादिभ्यश्नुः" इति विकरणप्रत्ययः । तदेव विशिनष्टि—यदीयं सौरभ्यं—यदीयं यत्सम्बन्धि, सौरभ्यं स्वभावसिद्धं परिमलम्, सहजम् अप्रयत्नसम्पादितम्, उपलब्धुं प्राप्तुम्, वलमथनवाटीविटपिनां—वलमथन इन्द्रः, तस्य वाटी नन्दनवनम्, तत्रत्यानां विटपिनां सन्तानकल्पवृक्षपारिजातादीनां सुमनसः पुष्पाणि "स्त्रियः सुमनसः पुष्पम्"

---

१ 'स नीडे' इति पाठः । २ 'किमिति न निवध्नाति' इति पाठः ।

इत्यमरः । अस्मिन् केशपाशे वसन्तीति मन्ये वाक्यार्थः; कर्म त्रिभुवनलोभनीय-सौरभ्ययुक्तानामपि कल्पवृक्षादिसुमनसां परिमलोल्लासादतिशयिताः भगवत्याः केशपाश-सहजसम्पद इत्यर्थः ॥ ४२ ॥

वहन्ती[1] सिन्दूरं प्रबलकबरीभारतिमिर-
त्विषां[2] वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ।
तनोतु क्षेमं न स्तववदनसौन्दर्यलहरी-,
परीवाहः स्रोतःसरणिरिव सीमन्तसरणिः ॥ ४३ ॥

सिन्दूरं नागरजः पुञ्जं वहन्ती धारयन्ती, प्रबलकबरीभारतिमिरत्विषाम्—प्रबलस्य निविडस्य कबरीभारस्य केशपाशस्य तिमिरभूतस्य, त्विषां नीलिमसम्पदाम्, वृन्दैः समूहैः, वन्दीकृतं वैरिसम्पर्काद्विजित्य गृहीतम्, नवीनार्ककिरणं बालादित्यकरप्रकरमिव वर्तमानं सिन्दूरं धारयन्ती, सीमन्तसरणिः द्विधा कृतकेशपाशमध्यरेखापद्धतिः, नः अस्माकम्, क्षेमं कल्याणम्, तनोतु करोतु । "तनु विस्तारे" इति धातुः करणार्थ एव प्रसिद्धः । कीदृशी सा, तव भवत्याः, वदनसौन्दर्यलहरीपरीवाहः स्रोतःसरणिरिव—वदनस्य मुखस्य, सौन्दर्य-लहर्या लावण्यपूरस्य परीवाहस्रोतःपरीवाहार्थं यत्स्रोतस्तस्य सरणिः मार्ग इव । परीवाहो नाम तडागादेरन्तः सलिलपूरभरणे कूलभङ्गभीत्या पार्श्वद्वये समधिकजलस्य वहिर्निस्सारणम् । अत्रापि भगवत्या मुखसौन्दर्यस्यात्यन्तपरिपूरितत्वं परीवाहशब्देन ध्वन्यते ॥ ४३ ॥

अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः,
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे,
सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः ॥ ४४ ॥

स्वाभाव्यात् स्वभावादित्यर्थः "चतुर्वर्णादिभ्य उपसङ्ख्यानम्" इति स्वार्थे ष्यञ् प्रत्ययः । अरालैः वक्रैः, अलिकलभस्य श्रीभिः भ्रमरबालवत्सशोभाभिः, अलकैः चूर्णकुन्तलैः, परीतं परिवेष्टितम्, ते तव, वक्त्रं पङ्केरुहरुचिम् कमलश्रियम्, परिहसति विडम्बयति । यतः कमलमेव जातं मुखं ततस्तद्धर्ममहादरस्मरे ईषद्विकसिते दशनरुचिकिञ्जल्करुचिरे दन्त-कान्तिकेसरभासुरे, सुगन्धौ शोभनेन परिमलयुक्ते, यस्मिन् वदने, स्मरमथनचक्षुर्मधुलिहा महादेवचक्षुर्भृङ्गा, माद्यन्ति मत्ता भवन्ति । स्मरमथनशब्देन योगिनोऽपि महादेवस्योन्माद-कारित्वात् भगवत्या वदनसौन्दर्यातिशयो व्यज्यते ॥ ४४ ॥

ललाटं लावण्यद्युतिविमलमाभाति तव यद्,
द्वितीयं तन्मन्ये मुकुटशशिखण्डस्य शकलं ।
विपर्यासन्यासादुभयमपि सम्भूय च मिथः,
सुधालेपस्फूर्तिः परिणमति राकाहिमकरः ॥ ४५ ॥

---

१ अयं श्लोकः पूर्वार्द्धोत्तरार्द्धव्यत्यासेन पठितः । २ 'द्विषाम्' इति पाठः ।

लावण्यद्युतिविमलं सौन्दर्यकान्तिनिर्मलं, तव भवत्या यल्ललाटं भालदेशः आभाति समन्ताद्दीप्तिं प्राप्नोति तत्ते ललाटं तव मुकुटशशिखण्डस्य किरीटेन्दुभिन्नस्य द्वितीयं शकलम् अर्धं मन्ये। तत्र हेतुमाह–विपर्यासन्यासात् ऊर्ध्वमुखस्य चन्द्रशकलस्य अधोमुखस्य तव ललाटस्य च विपर्यासन्यासात् वैपरीत्येन निवेशात् उभयमपि तद्द्वयमपि सम्भूय सङ्घट्टन-मिलितं यदा भवति तदा सुधालेपस्फूर्तिः खण्डयोरेकीभावो यत्र स तथोक्तः राकाहिमकरः पूर्णिमाचन्द्रः परिणमति सम्पद्यते······पदमुत्प्रेक्षाद्योतकमध्याहारार्थम् ॥ ४५ ॥

भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनी,
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे।
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः,
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे ॥ ४६ ॥

किञ्चिद् भुग्ने ईषदरालाकारे त्वदीये त्वत्सम्बन्धिन्यौ मधुकररुचिराभ्यां भ्रमरमाला-सदृशाभ्यां नेत्राभ्यां धृतगुणे सम्पादिमौर्वीके ते भ्रुवौ कर्मभूते ते धनुः कन्दर्पकार्मुकं मन्ये। यदि धनुः तया उत्प्रेक्षते मध्ये भ्रुवोर्लोचनयोश्च अन्तरं विच्छेदः कुत इति चेत्? तत्रोच्यते कन्दर्पस्य धनुराकर्षणवेलायां मुष्टिना धनुःशृङ्गमाच्छाद्यते प्रकोष्ठेन तु गुणः अत एव मध्ये अन्तरं दृश्यते तदेव प्रतिपादयति। सव्येतरकरगृहीतम्—सव्यं दक्षिणम्, तदितरं सव्येतरम् वामकरः, तेन गृहीतम्, एवं प्रकोष्ठे मुष्टौ च स्थगयति सति निगूढान्तरमाच्छादितमध्यं धनुः तन्मन्ये इति प्रकृते योजनीयम्। भुवनभयभङ्गव्यसनिनीत्यनेन शब्देन भुवनस्य जगतः भयभूतानां मधुकैटभमहिषादीनां भङ्गे निराकरणे व्यसनितया तात्पर्येण दुर्गादिवेषपरिग्रहं कृत्वा लोकोपकारिणी भगवतीति ध्वन्यते। उमे इत्यनेन शब्देन महादेवस्य महालक्ष्मीरूपिणी भार्या इति च प्रमा बुद्धिः संवित् स्वातन्त्र्यरूपिणी चेति उभयं प्रकाशते ॥ ४६ ॥

अहः सूते दक्षं तव नयनमर्कात्मकतया,
त्रियामां वामं ते सृजति रजनीनायकमयं।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः,
समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४७ ॥

हे परमेश्वरि! दक्षं दक्षिणं तव नयनम् अर्कात्मकतया भास्करस्वरूपत्वेन, अहः दिवम्, सूते जनयति। वामं ते नयनं रजनीनायकमयं चन्द्रमयम्, त्रियामां रात्रिम्, सृजति उत्पादयति, उचितं तयोरुत्पादनम्, सन्ध्या तु केन निर्मिता इत्याशङ्क्याह दरदलित-हेमाम्बुजरुचिः–ईषद्विकसितकमलशोभा तृतीया ललाटप्रदेशवर्तिनी ते तव दृष्टिः दिवस-निशयोः अहोरात्रयोरन्तरचरीं मध्यमसञ्चारिणीम्। "चरेष्ट" इति टः। "टिड्ढाणञ्" इत्यादिना ङीष्। सन्ध्यां सन्ध्याकालविशेषं समाधत्ते सम्पादयति। सन्ध्यायाः पाटलवर्णाया स्वभावपाटलात् तव ललाटलोचनादुत्पत्तेः कारणानुविधायि कार्यमुचितमिति भावः ॥ ४७ ॥

**विशाला कल्याणी स्फुटरुचिरयोध्याकुवलयैः,**
**कृपाधाराऽऽधारा किमपि मधुराभोगवतिका ।**
**अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया,**
**ध्रुवं तत्तन्नाम व्यवहरणयोग्या विजयते ॥ ४८ ॥**

हे परमेश्वरि ! विशाला अत्यन्तविशङ्कटा आकर्णपूरविस्तारगुणयोगात् विशाला नाम नगरी च कल्याणस्फुटरुचिः कल्याणा शोभना स्फुटा स्फुटा व्यक्ता शोभा यस्याः सा तथोक्ता । कल्याणमित्येकं नगरं गन्धर्वराजस्य प्रसिद्धम् । कुवलयैर्नीलोत्पलैः अयोध्या योद्धुम् अभिभवितुम् अशक्या अयोध्येति रामचन्द्रस्य नगरी प्रसिद्धैव । कृपाधाराधारा—कृपाधाराया दयाप्रवाहस्य आधारः आसमन्ताद्धरणं यस्याः सा तथोक्ता । धारानाम काचन नगरी । किमपि किञ्च अत्यन्तमाधुर्यालोकनवती मधुरा नाम कृष्णनगरी मधुरा मथुरा कृष्णनगरी मधुनिर्मितेति विश्वप्रकाशः । भोगवतिका भोगः परमेश्वरमुखावलोकनजनितपरमानन्दः सोऽस्य-अस्तीति भोगवतिका "स्वार्थे कः प्रत्ययः" भोगवत्येव भोगवतिका भोगवतीति पाताले नाग-राजस्य नगरी प्रसिद्धा । अवन्ती लोकान् रक्षन्ती । "अव रक्षण" इति धातोः "कर्तरि शप्" इति शप् "उगितश्च" इति ङीप् । अवन्ती नाम उज्जयिनीत्यपरपर्यायो नगरविशेषः । एवं-भूताया ते दृष्टिः बहुनगरविस्तारविजयात् बहूनां नगरीणां विस्तारस्य विशालतागुणस्य विजयात् अभिभवात् सा तत्तन्नामभिः व्यवहरणयोग्या तासां तासां विशालादिनगरीणां नामभिः व्यवहरणयोग्या ध्रुवं प्रायेण विजयते सर्वोत्कर्षेण विजयते । यो हि यं जयति स तस्य सर्वस्वं हृत्वा अवशेषकीर्तिप्रख्यापकरुद्रशब्दाङ्कितं नामापि गृह्णाति तद्वद् इति भावः ॥ ४८ ॥

**कवीनां सन्दर्भस्तवकमकरन्दैकभरितं,**
**कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।**
**अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला-**
**वसूयासंसर्गादलिकनयनं किञ्चिदरुणं ॥ ४९ ॥**

हे परमेश्वरि ! दक्षिणवामलोचनापेक्षया ललाटलोचनस्य अरुणकान्तिविशिष्टत्वे हेतुमाह—कवीनां ब्रह्मविष्णवादीनां भवच्चरणस्तोतॄणां सन्दर्भस्तवकः सन्दर्भो वाग्गुम्फो यः स एव स्तवकः पुष्पमञ्जरी तज्जनितो यो मकरन्दः तद् भरितमुख्यतया सम्पूरितं कर्णयुगलं तव श्रोत्रद्वयम् अमुञ्चन्तौ नवरसास्वादनलोलुपतया अपरित्यजन्तौ कटाक्षव्याक्षेपभ्रमर-कलभौ कटाक्षस्य व्याक्षेपः अपाङ्गविस्फुरणं तावेव भ्रमरकलभौ षट्पदबालकौ कर्मभूतौ दृष्ट्वा पुनः किम्भूतौ नवरसास्वादतरलौ प्रागुक्तब्रह्मादिकविप्रकाश्यमानसूक्तिसम्पन्नशृङ्गारा-दिरसास्वादनलोलौ दृष्ट्वा असूयासंसर्गत्वस्य ललाटदेशसम्पन्नत्वात् कर्णपर्यन्तागमना-भावात् रसास्वादि विरहे असूया संसर्गो भवति उभयोः समानाकारयोरेकस्य धनप्राप्तौ अन्यस्य असूया जायते । अत एव हेतोः अलिकनयनं ललाटलोचनं किञ्चिदरुणं पाटलवर्णं दृश्यते, क्रोधासूययोरीषद् भेदात् तत्संसर्गाद् रक्तत्वमुचितमिति भावः ॥ ४९ ॥

**शिवे शृङ्गारार्द्रा तदितरमुखे कुत्सनपरा,**
**सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।**
**हरादिभ्यो भीता सरसिरुहसौभाग्यजयिनी,**
**सखीषु स्मेरा ते जननि मयि दृष्टिः स करुणा ॥ ५० ॥**

शिवे महादेवे शृङ्गारार्द्रा शृङ्गाररसेन सरसा तदितरमुखे महादेवव्यतिरिक्तानां पुरुषाणां मुखे कुत्सनपरा घृणापरा अनेन बीभत्सरसो वर्णितः । गङ्गायां गिरिशजटाजूट-वर्तिन्यां मन्दाकिन्यां सरोषा रोषयुक्ता अनेन रौद्ररसो व्याख्यातः । महादेवस्य चरित्रे—चर्माम्बर, शवभस्मलेपन, श्मशानवास, भुजगभूषण, भूतप्रेतादिपरिवार, करणादि-लोकविरुद्धचेष्टात्मके शिवस्याचारे विस्मयवती अद्भुतरसयुक्ता । हरादिभ्यः हरस्य महादेवस्य भूषणीकृतेभ्यः सकाशाद्भीता अनेन भयानकरसो व्याख्यातः । सरसिरुह-सौभाग्यजयिनी सरसिरुहाणां कमलानां सौभाग्यस्य कान्तिविशेषस्य जयिनी जयशीला अनेन वीररसो व्याख्यातः । सखीषु जयाविजयाद्यालीगणेषु स्मेरा स्मितगुणयुक्ता अनेन हास्यरसो व्याख्यातः । "स्मेरशब्दे नमिकम्पिस्म्यजसकमहिंसदीपो रः" इत्यनेन सूत्रेण र प्रत्ययः । एवंभूता तव दृष्टिर्मयि सकरुणावती भवतु । अनेन करुणरसो व्याख्यातः । अत्र श्लोके शृङ्गारादीनामष्टानाम् अनाद्यरसानां संसारानाद्ये नियोगित्वात् महानटी प्रकृतिभट्टारिकामेवाश्रित्य वृत्तिरुक्ता, शान्तस्य तु नवमस्य रसस्य प्रबोधचन्द्र-व्यज्यमानवपुषः संसारसुखदुःखानुभवात्मकबहुचित्तव्याक्षेपजनितेन निर्वेदनाम्ना स्थायि-भावेन सततमुपेतस्य सकलचेष्टाध्वंसात्मकस्य निर्वेदव्यतिरिक्तसर्वसंसारभावरहितस्य एक-रूपस्याखण्डात्मकस्य महादेवैकाश्रयत्वात् भगवतीति चरित्रैकपात्रे न प्रतिपादनम् ॥ ५० ॥

**गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती,**
**पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले ।**
**इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके,**
**तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ५१ ॥**

कर्णाभ्यर्णं श्रवणसमीपं गते दीर्घतया, मदनशरस्य तु आकर्णपूर्णकर्षणसम्भवात् कर्णसमीपगमनं भवति । पक्ष्माणि नयनाच्छादकत्वविशेषप्रान्तरे स्वसञ्जातानि रोमाणि पक्ष्माणीत्युच्यन्ते तान्येव गरुतः बाणमूलगोचरान् पक्षान् दधती बाणस्य सपक्षत्वात्, पुरां भेत्तुः अयोरजतहिरण्याख्यानां गगनचारिणामसुराणां भेत्तुः नाशयितुर्महादेवस्य यः प्रशमरसविद्रावणफले प्रशमरसस्य शान्तिरसस्य अखण्डब्रह्मज्ञानौघसम्पादितविश्ववैमुख्य-रसस्य विद्रावणं दूरीकरणमेव फलं प्रयोजनं ययोस्ते तथाभूतेश्वरस्य फलत्वनियमात्— "फलं प्रयोजने वृक्षे प्रसवादौ शराग्रके" अत्र फलशब्दच्छलेन बाणाग्रमतितीक्ष्णलोह-शलाकां व्यञ्जयति । इमे सर्वलोकरक्षणक्षमे गोत्राधरपतिकुलोत्तंसकलिके तुहिनशैलकुल-

१ 'पुराम्' इति पाठः

सन्तानोप्तं समञ्जरि तव नेत्रे लोचने आकर्णकृष्टस्मरशरविलासं कलयतः सम्पादयतः, त्वत् कटाक्षविक्षेपेणैव भगवान् प्रशमरसं विहाय जगत् सृष्टिस्थितिसंहरणसहायस्तव साहाय्यमाचरन् भवच्चेष्टदर्शनाख्यमनुग्रहं कुर्वाणस्तिष्ठति। तस्य महादेवस्य दर्शनं विना समस्त-भूतानां भोगान्तरकैवल्यदानं त्वया क्रियते, दर्शनं शिवधर्मः कैवल्यं तव धर्मः एतत् प्रयोजनं तवैव युवयोः सम्बन्धः। दर्शनं भगवत्यधीनं न भवति, पुरुषैकधर्मत्वात्तस्याः कैवल्यकारणं पुरुषधर्मो न भवति, प्रकृत्येकधर्मत्वात्तस्य अन्योन्यसाधारणं तद्धर्मद्वय-मन्योन्यचेष्टककारणतयाऽन्योन्यसम्बन्धहेतुत्वेन पर्यवस्यति । तथोक्तं साङ्ख्यवृद्धैः "पुरु-षस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।" इति। इमं च सम्बन्धं विना न सृष्टिर्भवतीति तत्रैव तदुत्तरश्लोके सृष्टिप्रकारोऽपि दर्शितः। तथा हि–"प्रकृतेर्महान् ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि।" इति ॥ ५१ ॥

**विभक्तत्रैवर्ण्यंव्यतिकरितनीलाञ्जनतया,**
**विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते।**
**पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्,**
**रजः सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव ॥ ५२ ॥**

अस्मिन् श्लोके भगवत्या परप्रकृतिरूपत्वं वर्णयन् तत्स्वरूपस्य त्रैगुण्यस्य जगत्सृष्टि-कारणभूतस्य सर्वदा परमेश्वरीशरीरे नित्यावस्थानं वर्णयति । नेत्रत्रयमेव भगवत्या-स्त्रैगुण्यात्मना परिणतम्, त्रयोगुणास्तु सत्त्वरजस्तमोनामानः शुक्ललोहितकृष्णस्वभावाः। अत्रापि नेत्रेषु शुक्लत्वधवलापाङ्गे रक्तराजिषु लौहित्यं स्वतःसिद्धदिव्यकालाञ्जनसम्पर्कात् कृष्णमिति प्रकारेण भगवती लोचने त्रैवर्ण्यसिद्धिः। उक्तञ्च श्रुतौ–"अजामेकां लोहितशुक्ल-कृष्णाम्" इति । विभक्तित्रैवर्ण्यव्यतिकरितनीलाञ्जनतया विभक्तनेत्रवर्ण्येन व्यतिकरितं सम्बन्धनीलाञ्जनं येषु तानि तथोक्तानि। तेषां भावस्तत्र तया कारणभूतया तव नेत्र-त्रितयं तव लोचनत्रयम्। हे ईशानदयिते! विभाति विशेषेण दीप्तिं प्राप्नोति। केनेत्याह– द्रुहिणहरिरुद्रान्–ब्रह्मविष्णुशिवान् त्रिदेवान् उपरतान् सतः कालधर्मेण त्यक्तशरीरात्। पुनः स्रष्टुं शरीरान्तरेण योजयितुं रजः सत्त्वं तम इति गुणत्रितयं त्रिगुणसमुदायं बिभ्रद्दधान-मिति प्रतिभाति। ब्रह्मविष्णुरुद्राणामेव काले तेषां तु मूलभूतानां सत्त्वादिगुणानां न कदा-चित्क्षयः। तेषां खलु नित्यायाः प्रकृतिरूपत्वात्। न हि यत् किञ्चिद् वस्तु स्वरूपं न व्यभिचरति तद्व्यभिचारे तदसत्त्वापत्तिरिति शास्त्रसामान्यम् ॥ ५२ ॥

**पवित्रीकर्तुं नः पशुपतिपराधीनहृदये,**
**दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः।**
**नदःशोणो गङ्गातपनतनयेति ध्रुवममुं,**
**त्रयाणां तीर्थानामुपनयसि सम्भेदमनघे[१] ॥ ५३ ॥**

१ 'अनघम्' इति पाठः

हे पशुपतिपराधीनहृदये ! श्रीपरमेश्वरायत्तहृदये दयामित्रैः कारुण्यसम्पूर्णैः अरुणधवल-श्यामरुचिभिः अरुणत्वं रक्तराजिषु धवलत्वमपाङ्गभागे श्यामलत्वं कृष्णमण्डले इति त्रिधा-वर्णविन्यासेन शोभमानैर्नेत्रैः, नः अस्मान्, पवित्रीकर्तुं लोकपावनान् कर्तुम्, नदःशोणः हिरण्यबाहुश्च, "शोणो हिरण्यबाहुः स्यादित्यमरः।" गङ्गा जाह्नवी, तपनतनया कालिन्दी च इति त्रयाणां जगत्प्रसिद्धानां महातीर्थानां सम्भेदं संसर्गम्, अन्योन्यमेलनम्, उपनयसि सम्पादयसि । हे अनघे ! अपापशीले, त्वच्चरणनिरतानां भक्तानां त्वद्व्यतिरेकेण तीर्थोपाश्रयः व्यर्थ एव त्वदीयालोकनस्पर्शशाम्भववेधदीक्षाशुशुक्षणितत्क्षणप्लुष्टसमस्तदुरिततूलपुञ्जतया नित्यपरिशुद्धा एव परिपूर्णास्ते तथा हि-"तीर्थानि तोयपूर्णानि देवान् पाषाणमृण्मयान् योगिनो न प्रपद्यन्ते आत्मध्यानपरायणाः।" इति। न वारिणा शुध्यति चान्तरात्मा इति च ॥ ५३ ॥

तवापर्णे कर्णे जपनयनपैशुन्यचकिता,
निलीयन्ते तोये नियतमनिमेषाः शफरिकाः ।
इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं,
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ ५४ ॥

हे अर्णे ! अपगतऋणसम्बन्धे ऋणशब्देन जगतां सृष्टिस्थितिसंहारकर्मसु आलस्य-वशाद् यत्किञ्चित् कर्मासमापनमुच्यते तन्नास्ति तव । यद् यदा जगतः कर्तुमुचितं तद-नवशेषमेव अनलसतया सम्पादयसि । कर्णे जपनयनपैशुन्यचकिता कर्णे जपतोः कर्णं प्राप्य जपतोः नयनयोः पैशुन्यात् पिशुनभावात् हे भगवति ! निरुपमलावण्यायाः तव सम्बन्धयोरावयोरनुपमशोभायुक्तयोः शोभा विडम्बका शफरिका अस्मत्तु द्रोहिण्य एताः पश्य किञ्च सर्वदा अस्मत्–कान्तिषु कमलेषु या श्रीर्वर्तते सा अस्मद् द्रोहिण्य एव तदुभयोरनयो-स्तदाकायान् मद् विरुद्धयोस्तथैव सम्बन्धो न क्रियतां–न किञ्चिदप्यालस्यमालम्ब्यताम् इत्येवं रूपवचनकलापात्मकत्वात् परद्रोहवचनाच्चकिताः भीताः । "चक भये" इति धातोः निष्ठायाम् । इति चकिताः सत्यः अनिमेषाः निमेषशून्या भवन्त्यश्च शफरिका मत्स्यविशेषा नियतं निश्चयेन तोये निलीयन्ते जलदुर्गमाश्रयन्ति । महाराजगोचरपिशुनजनोदीरितानां सामन्तानां दूरं प्रपलाय्य दुर्गाश्रयणं स्वभावः । किञ्च इयं श्रीः कमलकर्णिका सिंहासना-रोहणमहादेवपदवीमधिरूढा लक्ष्मीरपि त्वन्नयन, पैशुन्याद् भीता सती बद्धच्छदपुटकपाटं छदा पर्णान्येव कपाटमपरं तद् द्वन्द्वं सुघटितं दत्तार्गलं यस्य तत् कुवलयम् । रात्रौ छित्त्वा प्रत्यूषसमये जहाति त्यक्त्वा गच्छति, दिवसे इतस्ततो भ्रमणाय देशे समयं नीत्वा पुनरपि निशि रात्रौ विघटय्य पूर्वोक्तदलकपाटोद्घाटनं कृत्वा प्रविशति । राजपराधीनः खलु लोके रात्रौ निभृतया स्वगृहे तिष्ठति प्रातःकाले कपाटेन गृहं मुद्रयित्वा यत्र क्वचिदज्ञातवासाय प्रपलायते इति ॥ ५४ ॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती,
तवेत्याहुः सन्तो धरणिधरराजन्यतनये ।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः,
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५५ ॥

हे धरणिधरराजन्यतनये शैलराजनन्दिनि भूधरेन्द्रतनूजे ! निमेषोन्मेषाभ्यां तव लोचनयोर्निमीलनोन्मीलनाभ्यां प्रलयं संहारम् उदयं सृष्टिं च कर्म जगती कर्त्री समस्तभुवनावलिर्याति प्राप्नोतीति सन्तो भूतभविष्यद्वर्तमानविदः आहुः निगदन्ति "ब्रुवः पञ्चानामादित आहो ब्रुवः" इत्याहादेशः । यदित्थं वदन्ति तत्प्रायेण सत्यम्, इति प्रतिपादयति । त्वदुन्मेषा तवलोचनोन्मीलनात् जातं लब्धसत्ताकं जगदिदं शिवादिक्षितिपर्यन्तं तत्त्वजालविनिर्मितभुवनसंस्थानं कर्म प्रलयतः संहारतः सकाशात् परित्रातुं रक्षितुं परिहृतनिमेषाः निमीलनरहितास्तव दृश इति शङ्के वाक्यार्थं कर्मं अस्मिन्नर्थे भगवती भक्तचूडामणिश्रीवत्सराजोऽपि कामसिद्धिस्तोत्रेऽपि उक्तवान्—"लोको चतुर्दशमहेन्द्रमुखाश्च देवा मातस्त्रयीमुनिगणाश्च वशिष्ठमुख्याः ॥ सद्यो भवन्ति न भवन्ति समस्तमूर्ते सन्मीलनेन तव देवि निमीलनेन ॥" सर्वासामपि देवाङ्गनानामनिमेषलोचनं वर्तते तद् भगवत्या अपि स्वभावसिद्धं देवजातप्रसिद्धनिमेषलोचनत्वमुत्प्रेक्ष्यते कविना इति न मन्तव्यं, भगवत्या लोचनयोरेवाऽयं प्रभावः यत्कर्मकारणपौर्वापर्यव्यवस्था व्यतिरेकेण च उपादानकारणपूर्वनियतविद्यमानताव्यतिरेकेण हि बुद्धिमत्कर्तव्यवाङ्मनः शरीरचेष्टाविरहेणानेकमन्त्रतन्त्रसाधितैः जालिकयोगिपुरुषकरतलकलितशुद्धपिच्छाभ्रमणमात्रपरिक्षणसम्पादितकपटसमुद्रगन्धर्वनगरादिसादृश्येन स्वात्मस्थितमेव विश्वप्रपञ्चं भगवत्या लोचनमेव सृजति–रक्षति–संहरति, इत्यागमशास्त्रप्रसिद्धस्वभावोक्तिरेव मन्तव्या, नहि परमार्थवचनवेलायां कविकल्पितमिथ्यालङ्कारोत्प्रेक्षालङ्कार इति ॥ ५५ ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा,
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता,
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५६ ॥

हे शिवे भक्तजनकल्याणात्मिके ! दरदलितनीलोत्पलरुचा ईषद्विकसितेन्दीवरकाननन्दाकरकान्त्या द्राघीयस्या दीर्घतरया दीर्घशब्दादपि प्रत्यये "प्रियस्फिरस्थिरेत्यादिसूत्रेण" दीर्घतरशब्दस्य द्रध्यादेशः "उगितश्चेति ङीप्" द्राघीयसी, एवंभूतया दृशा दवीयान्सं अत्यन्तदूरवर्तिनं दीनं वहुतरतृष्णाकार्पण्यवशात् सर्वतो यात्रापरायणं "दीङ्क्षये" इति धातोर्निष्ठानान्तत्वे दीनं मां कृपया करणभूतया स्नपय आलोचय, "स्नातेः कर्मणि" चिण् प्रत्यये पुगागमे मित् संज्ञायां 'मितां ह्रस्वः' इति ह्रस्वः । मामपीत्यपि शब्दसमुच्चयेन ये गुणवन्तस्त्वयि भक्तिमन्तः कृतत्वच्चरणपूजाश्च तेषां दयया रक्षणं करोत्येव त्वद् रक्षणे उदान्येऽपि कृतसत्कर्मफलावश्यम्भावनियमात् तत्कर्ममाहात्म्ये प्रेरितया त्वया तेषां

परिपालनं कर्तव्यमेव, नाहं तादृशगुणी न भक्तो नार्चापरः केवलं बालकवदम्बाम्बेति दीनाक्रन्दनमात्रपरायणः। तस्य मम रक्षणमेव अद्भुतस्वभावकीर्तये धर्माय च तान् रक्षस्येव कीर्तिधर्मार्थं मामपि रक्षेति अर्थसङ्गतिरवगन्तव्या। यन्मम दीनस्य परिपालनमस्ति तेनानेनायं धन्यो भवति। एतच्छब्देन आत्मानमेव घटकुड्यादिवदप्रयोजकतया अचेतनतया च उत्पन्नं परामृशति। अहं प्रयोगस्थाने इदं शब्दादयः दैन्याद्यर्थान्तरसहकृताः सन्तः विशिष्टमहार्थं प्रतिपादयन्ति। अनेककर्मणा ममापि धन्यता तवापि इयता हानिर्नास्ति। अपल्वेच्छामात्रसाध्यतया मद्रक्षणस्य तव लीलामात्रमेवेति भावः। गुणवत्पुरुषाभ्युपपत्तौ एव स्वामिजनस्य रिरक्षयिषा स्वार्थेति चेन्नायं नियमो गुणवानेव रक्ष्यः निर्गुणस्त्याज्य इति। तथा च दृष्टवने वा कानने वा हर्म्ये वा नायकनायिका सरसानन्दसंयोग्ये प्रदेशेऽपि हिमकरश्चन्द्रमा युगपदेव अनिमेषेण समकरनिपाती भवति—समानकिरणप्रचारी भवति। अनायाससाध्ये बहुतरकीर्तिधर्मोपजनके दीनानाथविपन्नसमुद्धरणपण्डिते अनुपाधिकारुणिकोपलम्भासम्भाविते रक्षणात्मके सत्कर्मणि न हेलावलम्बनमुचितमिति भावः ॥ ५६ ॥

अरालं ते पालीयुगलमगराजन्यतनये,
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम्।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-
न्नपाङ्गव्यासङ्गो दिशति शिरसन्धानधिषणाम् ॥ ५७ ॥

हे अगराजन्यतनये! न गच्छतीति अगः—पर्वतः—तद्राजन्यः ततः श्रेष्ठः हिमवान् तत्तनये कुलप्रदीपिके! अरालं चक्राकारं पालीयुगलं श्रवणाभरणविशेषयुग्मम्। "पाली प्रवाली कर्णाङ्गी कर्णकोटी विभूषणा।" इति विश्वः। कुसुमशरकोदण्डकुतुकं कुसुमशरस्य कन्दर्पस्य कुतुकं कोदण्डविशिखपर्यायान्तानि पुष्पाणि सर्वाणि स्मरनाममयानि। कोदण्डस्य कुतुकं कोदण्डमेवेतदिति कुतूहलाभिनिविष्टमभिप्रायं केषां पुरुषाणां नाधत्ते न सम्पादयति अपितु सर्वेषामित्यर्थः। यदिदं पालीयुगलमनङ्गधनुः स्यात् तत्र शरसन्धानं न कथम् इत्याशङ्कायामाह—तिरश्चीन इति। यत्र पालीयुगले तिरश्चीने तिर्यक्तया वर्तते श्रवणपथमुल्लङ्घ्य-कर्णप्रान्तं लङ्घयित्वा विलसन् दैदीप्यमान अपाङ्गव्यासङ्गः कटाक्षविक्षेपचातुर्यविशेषः शरसन्धानधिषणां बाणसंयोजनबुद्धिं दिशति सम्पादयति तत्ते पालीयुगलमिति पूर्वत्र सम्बन्धः ॥ ५७ ॥

स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं,
चतुश्चक्रं शङ्के तव मुखमिदं मन्मथरथम्।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं,
महावीरो मारः प्रमथपतये स्वं [1]जितवते ॥ ५८ ॥

---

१ 'सज्जितवते' इति पाठः।

हे परमेश्वरि! स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं स्फुरतो लावण्यकान्तिधावल्येन समुन्मृष्टदर्पणोदरवत् प्रतिबिम्बग्रहणे निपुणयोः गण्डभोगयोः कपोलस्थलयोःप्रतिफलितं सञ्जातसम्भ्रान्तिताटङ्कयुगलं कर्णपाशमण्डकाराभरणविशेषयुग्मं यत्र तत्तथोक्तम्, मुखस्य विशेषणम्–बिम्बयुगलस्य प्रतिबिम्बयुगले जाते चतुःसङ्ख्योपलम्भाच्चतुश्चक्रं चतुर्भिश्चक्रैर्वाहनीयं मन्मथरथमेव इदं तव मुखं शङ्के। तदेव विशिनष्टि–यं तवमुखलक्षणं मन्मथरथमारुह्य महावीरो मारः कर्ता अर्केन्दुचरणभास्करनिशाकरभास्वरं चक्रोज्ज्वलमवनिरथं भूमिरथमारुह्य स्वात्मानं जितवते तिरस्कृतवते प्रमथपतये महादेवाय द्रुह्यति पराभवं करोति। द्विचक्रस्य रथस्य गमनवैकल्यसम्भवात् तदधिगताय चतुश्चक्रसम्भवे तद्रथितं प्रतीतमानरथिनः पराजयो युक्तः। आरुह्येति दीपिकालङ्कारः, यमारुह्येति कन्दर्पेण सह सम्बन्धः। अवनिरथमारुह्येति महादेवेन सम्बन्धः। सम्बन्धद्वये दीपगतशतशब्दस्य यथा जामात्रार्थो दीपः सर्वं वेश्माभिज्वलयति इति कार्यद्वयसाधनद्वारा अर्थद्वयोद्दीपनसम्बन्धाद् दीपकत्वम्। अत्र श्लोके महादेवस्योपरि मन्मथजयसम्पत्त्या महादेवस्य काममोहितचित्तवृत्तितया तन्मोहनैकरसिकस्य भगवती वदनारविन्दस्य समधिकशृङ्गाररसार्द्रभावे सम्पन्ने महादेवलावण्यकान्तिविशिष्टं लोकोत्तरत्वमुट्टङ्कितमिति भावः॥ ५८ ॥

**सरस्वत्याः सूक्तीरमृतलहरी कौशलहरी,**
**पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम्।**
**चमत्कारश्लाघाचलितशिरसः कुण्डलगणो,**
**झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते॥ ५९ ॥**

हे शर्वाणि! "इन्द्रवरुणभवशर्वरुद्रमृडे"त्यादिनाऽऽनुक् ङीप् प्रत्ययश्च। हे शर्वदयिते! अमृतलहरी कौशलहरी अमृतलहरीणां सुधाप्रवाहाणां तरङ्गभङ्गविक्षोभा। "लहरी वीचिकोर्मयः" इति विश्वप्रकाशः। कौशलं माधुर्यात्मकं सामर्थ्यविशेषं हरन्ति दूरीकुर्वन्ति–इति हराः स्वाधिक्येन तस्या न्यूनता सम्पादयित्रीः सरस्वत्या वाग्देवतायाः सूक्ती–सुवचनविन्यासमधुरस्फीतगिरः उक्तीः श्रवणचुलुकाभ्यां कर्णपूरकरतलाभ्यां करतलेन पानीयादि पेयं विधीयते इति करतलसाधर्म्यं श्रवणस्य तेन कृतः वचनसरस्वतीसूक्तीनाममृतरसात्मकत्वं ध्वन्यते, पिबन्त्या आस्वादयन्त्यास्तदर्थविशेषचमत्कारमनुभवन्त्या अत एव हेतोः अविरतं सदैवचमत्कारश्लाघाचलितशिरसः कुण्डलगणः चमत्कारो नाम श्रूयमाणगीतशब्दादिजनितो माधुर्यातिशयः, तस्य श्लाघा उपलालनं तेन चलितशिरसः कम्पितमूर्ध्नः तव कुण्डलगणः सूक्ष्मकुण्डलसमूहात्मको–भूषणविशेषः तारैः अत्युच्चध्वनिविशिष्टैर्झणत्कारैः स्वकीयमणिगणसङ्घट्टनजनितसंरटनैः प्रतिवचनमाचष्ट इव प्रत्युत्तरं दत्त इव प्रथम प्रश्नवचनसमनन्तरसदुत्तरप्रदानसमं शोभते इति सूचितं भवति, सरस्वतीसूक्तेः कलमधुरत्वात् कुण्डलगणझणत्कारमिव माधुर्ये सति तयोः सनादार्थं साम्यमस्तीति भावः॥ ५९ ॥

असौ नासावंशस्तुहिनगिरिवंशध्वजपटी,
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।
वहन्नन्तर्मुक्ताः शिशिरतरनिःश्वासजनिताः,
समृद्ध्यायस्तासां वहिरपि च मुक्तामणिधरः ॥ ६० ॥

तुहिनगिरिवंशस्य हिमवदन्वयस्य ध्वजपटिकीर्तिप्रख्यापनमङ्गलवैजयन्तिचीनांशुकपटीके, असौ विद्यमानसौन्दर्योपमितिरतिप्रसिद्धस्तवनासावंशकोमलवंशरूपेण ऋजुरमणीयतया ललाटलम्बित्वाद्वंशसाधर्म्यम् । अस्माकं नेदीयमन्तिकमुचितं, त्वद्भक्तेर्मम च भक्तस्य समुचितफलम् धर्मार्थकाममोक्षचतुर्विधपुरुषार्थलाभरूपं प्रयोजनं फलतु-सम्पादयतु, वंशकाण्डस्य फलवत्वनियमात् कविसमये प्रसिद्धिरस्ति वंशकाण्डान्मुक्तोत्पत्तिस्तादृशदेशकाल-विशेषसन्निधिसम्भव इति तं प्रमाणीकुर्वन् कविरपि वंशस्तवान्मुक्ताप्रसूतिमाचष्टे, तव नासा-वंशे मुक्ताप्रसूतिरस्ति इति प्रत्यक्षमेव प्रमाणम् । शिशिरतरनिःश्वासजनिताः शिशिरतरेण शीतलेन निःश्वासेन श्वसितवदनेन जनिताः सम्पादिताः तदभ्यन्तरे मुक्तावहन् अयं नासावंशस्तासामभ्यन्तरे वर्तमानानां निःश्वासरूपिणीनां देवतानुभावसम्पन्नमुक्तभावानां समृद्ध्या यो नासावंशः वहिरपि वहिःप्रदेशेऽपि नासाग्रमौक्तिकव्याजेन मुक्तामणिधरः मुक्ता-मणिं प्रसूतमङ्गे धारयन्निव वर्तते, स नासावंशोऽस्माकं फलमुचितं दधातु इति पूर्वत्र सम्वन्धः ॥ ६० ॥

प्रकृत्या रक्तायास्तव सुदतिदन्तच्छदरुचेः,
प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलताः ।
न विम्बं त्वद्बिम्बप्रतिफलनलाभादरुणितं,
तुलामध्यारोढुं कथमिव न लज्जेत कलया ॥ ६१ ॥

हे परमेश्वरि ! प्रकृत्या स्वभावतो रक्ताया अरुणवर्णाया दन्तच्छदरुचेः शोभायाः सादृश्य-मुपमानम्, हे सुदति ! तदा प्रवक्ष्ये निवेदयिष्यामि—कदाचिद् विद्रुमलताफलं जनयतु, विद्रुमस्य स्वभावतो रक्तस्य यदि फलजननं भविष्यति तत्रापि परिपाकेन अतिशयितपाटलकान्ति-र्भविष्यति, तदेवोपमानं वक्तुं सुकरं नान्यथेत्यर्थः । मध्ये शङ्का—ननु सर्वः स्त्रीणामधरकान्ते-रुपमास्थानमतिमृदुलस्पर्शमत्यरुणितसम्पदवस्थानभूतम् अखिलेभ्यः फलेभ्योऽप्यतिप्रेक्षणीय-कान्तिभरितविम्वफलं वर्तते खलु, तेन समं कथं न विम्बाधरोपमानसिद्धिर्न स्यात्, किमर्थं वा अविद्यमानफलात् फलोत्पत्तिः विद्रुमोपमेति द्वारा अभूतपूर्वोपमाश्रयणकार्पण्यवैशस-मङ्गीक्रियते इत्याशङ्कायामाह—**न विम्बमिति** । विम्बं तावदुपमास्पदं न भवतीत्यर्थः । कुत इत्याह—त्वद्बिम्बप्रतिफलनलाभादरुणितं तव विम्वस्य शरीरस्य प्रतिफलनलाभात् सङ्क्रा-न्तिलाभादरुणितम्, अत्र फलनं नाम शक्तिपातः स खलु सर्वव्यापिन्याः पराशक्तेः किरणकदम्बकानां तत्तत्पदार्थेषु स्फुरणात्मकः प्रतीयते, यावन्त्येव रक्तपुष्पाणि सौम्यानि

---

१ 'वहत्यन्तरिति' पाठः । २ 'कर' इति पाठः । ३ 'गलितमिति'—पाठः । ४ 'यत्तासामिति' पाठः ।

प्रेक्षणीयानि भवन्ति तानि तानि सर्वाण्यपि जगद्व्याप्तमूर्तेः श्रीललितामहाभट्टारिकायाः सर्वतः प्रसरतामरुणिमस्रोतसां प्रतिबिम्बभूतान्यपीत्यागमः। पाटलः खलु वर्णः प्रथमोत्पन्नत्वात् अक्षिरञ्जनकारणत्वाद् रजस्तत्त्वं मुख्यतया उक्तं भगवत्या श्रुत्या–"अजामेकां लोहितशुक्लकृष्णाम्" इति। "रक्तशुक्लवर्णपदद्वन्द्वम्" इति च वेदागमयोः प्रथमवर्णनीयत्वम्। पाटलवर्णस्यागमश्चात्र–"यानि सौम्यानि शोणानि, शृङ्गाररसभाञ्चि च। तान्यम्ब शक्तिपातेन सम्पन्नानीति निश्चयः॥" प्रवालेषु रक्तमारलेषु कुसुम्भेषु कुङ्कुमेषु कमलेषु वालादित्येषु त डत्सु वह्निशिखासु सन्ध्यासु सिन्देषु अन्येष्वेतादृशेषु माङ्गलिकसौन्दर्यमङ्गलाकारेषु पदार्थेषु भगवत्या प्रतिफलनं शक्तिपात इति सकलागमनिश्चितोऽर्थः। अत एव त्वच्छरीरकिरणसम्पन्नशक्तिपातमात्रपरिपाटलकान्तिना विम्बेनापि तवाधरस्य तुलासिद्धिर्नास्त्येव। तत्कुतो हेतोस्त्वच्छक्तिपातसौन्दर्यसम्पन्नं त्वत्तो लब्धजीवितं विम्बफलं पुनस्त्वदधरकान्त्यासहोपमानसिद्धिसहचरीं स्पर्धां कर्तुं अत एव तद्द्वारा तुलामध्यारोढुं कलयापि लेशांशस्पृष्टिकयापि कथं न लज्जेत अपि तु लज्जेतैवेत्यर्थः। अत एव त्वदधरविम्बमतुलमेव सम्पन्नमित्यर्थः॥ ६१॥

**स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां,**
**चकोराणामासीदिति रसतया चञ्चुजडिमा।**
**अतस्ते शीतांशोरमृतलहरीमम्लरुचयः,**
**पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया॥ ६२॥**

हे परमेश्वरि! तव वदनचन्द्रस्य आननशीतांशोः "वक्त्रास्ये वदनं तुण्डमित्यमरः।" स्मितज्योत्स्नाजालं स्मितमेव ज्योत्स्नाजालरूपेण वर्तमानं परमामृतं पिबतामास्वादयतामनवरतमेतद्रसचर्वणानिवृत्त्यैव निरन्तरपानसन्तानकारिणीमतिरसतया चञ्चुजडिमा चेटि कोटि जाड्यम्" "चञ्चुस्त्रोटिरुभेस्त्रियाम्" इत्यमरः। लोके खलु अतिमधुरास्वादनक्रिया समभिहारेण पुनस्तथास्वादनशक्तिवैमुख्यकारि जिह्वाजाड्यं सम्भवति। तच्छान्तिस्तद्विरुद्धैरेवाम्लार्दिलोकसामान्यरसैर्निर्वर्तते। पुनरेवं प्रकारेण माधुर्यजनितजिह्वाजाड्ये उपशान्ते पुनर्मधुररसास्वादनपरमानन्दसम्पदुत्तम्भनं भवति। तथा चकोरेष्वेतदृश्यते। अत एव हेतोः जिह्वाजाड्यविमोचनार्थं निशि निशि-रात्रौ रात्रौ शीतांशोश्चन्द्रमसः अमृतलहरी पीयूषधारामयज्योत्स्नां काञ्जिकधिया मधुरजाड्यनिराकरणामृतरसास्वादहेतोः काञ्जिकधिया सौबीरबुद्ध्या आत्तरुचयः सन्तस्ते चकोराः पिबन्ति आस्वादयन्ति। चकोराणां त्वदाननचन्द्रस्मितपीयूषधारामाधुर्यसम्पत्तेः काञ्जिकप्रमाणमेवैतच्चन्द्ररुचिमाधुर्यमित्यनेन भवति। मुखचन्द्रस्य चन्द्रात्कोटिगुणाधिक्यम्, अम्बिकायाः स्मितमाधुर्यस्य चन्द्रिका रसात् कोटिगुणधिक्यं च समुट्टङ्कितं प्रकाशितमित्यवधारणीयम्॥ ६२॥

**अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजटा,**
**जपापुष्पच्छाया तव जननि जिह्वा जयति सा।**
**यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी,**
**सरस्वत्या मूर्तिः परिणमति माणिक्य वपुषा॥ ६३॥**

हे परमेश्वरि ! पत्युः स्वामिनो महादेवस्य गुणगणजपाम्रेडितजटा—गुणगणस्य धर्मज्ञान-वैराग्यैश्वर्यादि गुणकदम्बकस्य जपस्य ( कथायाः ) आवर्तनस्य यदाम्रेडनं पुनः पुनरनुष्ठानम् "आम्रेडनं द्विस्त्रिरुक्तम्" इत्यमरः। तेन जटा इतरशब्दग्रहणवैमुख्येन तदेकनाम-ग्रहणमात्रोपलक्षणशक्तिका, पुनः किम्भूता ?। जपापुष्पच्छाया "जपा जम्वा तथोण्ड्रं स्यान्मन्दारमति पाटलम्।" इति विश्वप्रकाशः । जपापुष्पस्य छायेव छाया यस्य सा तथोक्ता, तव जिव्हा तालुलता सा सर्वोत्कृष्टसौन्दर्यसाराश्रयभूता सती जयति सर्वोत्कृष्टतया वर्तते। पुनस्तामेव जिह्वां विशिनष्टि—यदग्रासीनाया यस्या जिह्वालता अग्रे अग्रभागे आसीनाया उपविष्टायाः सरस्वत्या भगवत्या भारत्याः स्फटिकदृषदच्छ-विमयी, विमलोपलधवलशोभासम्पूर्णमूर्तिः शरीरं माणिक्यवपुषा माणिक्यशैलशैलोत्पन्न-लोहितकरत्नस्वरूपेण परिणामेन परिणमति, आमुक्तपूर्वरूपस्य रूपान्तरापत्तिः परिणामः। त्वज्जिह्वालता पाटलिमसम्पदः प्रतिविम्बेन स्वभावधवलाकारा सरस्वती तनुरतिरक्तता-मापन्ना, यतः तत एव हेतोः तव चक्रसिंहासनतृतीयावरणाष्टारमण्डलस्थाः वशिन्यादयः वाग्देवता अष्टौ सिन्दूरसौन्दर्यतनुसौन्दर्या इति सकलागमप्रसिद्धिः । त्वज्जिह्वाग्रे या सरस्वती सन्निहिता सैव तत् किरणपाटलाकाररक्तवर्णा वशिन्यादिरूपेण वहिरावरण-देवतात्वेन भगवतीं सेवते । उक्तमागमे—"तत एव समुद्भूताः तस्यामेव कृतालयाः। तत्स्वरूपास्तत्प्रतापा नवावरणदेवताः ॥" ६३ ॥

रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिः,
निवृत्तैश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।
विशाखेन्द्रोपेन्द्रैः शशिविशिरकर्पूरशकलाः,
विलुप्यन्ते मातस्तव वदनताम्बूलकणिकाः ॥ ६४ ॥

भगवत्या एव ब्रह्मविष्ण्वादयो देवाः पुत्रा एव तदुच्छिष्टोपभोगदर्शनात् इत्यागमप्रमाण-सिद्धमर्थं वर्णयति—**रणे जित्वेति**। रणे युद्धे दैत्यान् देवशत्रून् जित्वा परिभूय अपहृत-शिरस्त्रैः अपहृतानि शत्रूणां शिरस्त्राणि मुकुटानि यैस्तथोक्तैः, रणे शत्रून् जित्वा तदीय-मुकुटादिचिह्नापनयनं वीरमाहात्म्यद्योतनं भवत्यनेनेत्यभिहितम् । अपहृतशिरस्त्रैरिति कविभिः आमुक्तवर्मभिः निवृत्तैः समरतः प्रत्यावृत्तैरत एव वुभुक्षितैः पितुर्महादेवस्य चण्डे-श्वरैकान्तभूतत्वात् उच्छिष्टभोजनात् विमुखैरत एव चण्डांशत्रिपुरहरनिर्माल्यविमुखैः। चण्डस्यांशश्चण्डांशः, त्रिपुरहरस्य निर्माल्यं त्रिपुरहरनिर्माल्यं तत्र विमुखैः अन्योपलब्ध-भागतया निरस्तप्रत्याशैः विशाखेन्द्रोपेन्द्रैः, विशाखश्च कार्तिकेयश्च इन्द्रश्च पुरन्दरश्च उपेन्द्रश्च विष्णुश्च एतैर्महावीरैः शशिविशदकर्पूरशकलाः चन्द्रवच्छुक्लवर्णाः कर्पूरशकला हिमवालुक-खण्डत्रयोपेतास्तथोक्ताः, तव वदनताम्बूलकणिका वक्त्रताम्बूलपीयूषविप्रुषः विलुप्यन्ते अहमहमिकया विलुप्यन्ते स्वीक्रियन्ते इत्यर्थः। यदुच्छिष्टभोजिनो ये भवन्ति तदङ्ग-

१ 'विशद' इति पाठः। २ 'कवलाः' इति पाठः।

भूतास्ते पुत्रादयस्तद्रूपा एवेति निश्चयः। अत एव सकलजननीत्यागमेषु प्रसिद्धाः। सकलब्रह्मविष्ण्वीशाः स्वाधिकारैकलाञ्छितास्तत्सुतास्तत्सुतं विश्वमतः सकलमातृका सर्वातिशयितया न सम्पदो ब्रह्मादीनां भगवत्यास्तदुच्छिष्टेनोपभोगसम्पत्त्यैव सम्पृक्तो जायते ॥ ६४ ॥

विपञ्च्या गायन्ती विविधमवदातं पशुपतेः,
त्वयारब्धे वक्तुं चलितशिरसा साधुवचने।
त्वदीयैर्माधुर्यैरपहसिततन्त्रीकलरवां,
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥ ६५ ॥

हे परमेश्वरि! विपञ्च्या वीणया "विपञ्ची सा सुतन्त्रीभिः सप्तभिः परिवादिनी।" इत्यमरः। विविधं नानाभेदं पशुपतेर्महादेवस्य अवदातं पराक्रमजालं गायन्ती उपवीणयन्ती वाणी वाग्देवता कर्त्री स्वगानानन्तरं साधुवचनैः 'साधु साधु, सम्यग्गीतं भवत्या' इति गीतोपलालनवचनैः सह चलितशिरसा कम्पितमौल्या त्वया वक्तुमारब्धे सति एतादृशं गीतमतिमधुरमास्वादितमपरमिति वत्से सरस्वति प्रकाश्यतामित्येवंरूपेण वचनेन वक्तुमारब्धे त्वदीयैः त्वद्वदनवर्तिमाधुर्यैः अपहसिततन्त्रीकलरवा अपहसितास्तिरस्कृततन्त्रीणां गुणानां कलः अव्यक्तमधुरो रवो नादो यस्या तां तथोक्तां, निजामात्मीयां वीणां वल्लकीं चोलेन आच्छादन इति प्रसिद्धेन निचुलयति आवृतां करोति, सङ्गीतसमाप्तिमेव करोतीति यावत्। "चुल आच्छादन" इति धातुरदन्तः प्रसिद्धः, णिचि सति अल्लोपस्य स्थानिवद्भावात् "पुगन्तलघूपधस्य च" इति गुणाभावः। निभृतमित्यनेन केनाप्यपरिज्ञाततां वर्णयित्वा कविना लज्जावशात् सरस्वत्याः सङ्गीतगोष्ठीभङ्गो व्याजान्तरेण तथैव कारित इति सूचितम् ॥ ६५ ॥

कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया,
गिरीशेनोदस्तं मुहुरधरपानाकुलतया।
करग्राह्यं शम्भोर्मुखमुकुरवृत्तं गिरिसुते,
कथङ्कारं ब्रूमस्तव चिबुकमौपम्यरहितम् ॥ ६६ ॥

हे गिरिसुते–शैलाधिराजतनये! तुहिनगिरिणा हिमवता वत्सलतया वात्सल्यरसेन कराग्रेण हस्ताग्रेण स्पृष्टं जातसम्पर्कम् पित्रादयः खलु पुत्रादीनामुपलालनसमये चिबुकं स्पृशन्ति इति प्रसिद्धिः। गिरिशेन महादेवेन जगन्मङ्गलमूलभूतेन सम्भोगसमये अधरपानाकुलतया बिम्बाधररसग्रहणपारवश्येन मुहुः सर्वदा उदस्तमुत्तोलितं, लज्जया खलु स्त्रीणां सम्भोगसमये मुखमवनतमेव जायते तदुत्तोलितमेव सुचुम्बनं भवतीत्यभिप्रायः, किञ्च करग्राह्यं पाणिनोपलालनीयशम्भोः महादेवस्य मुखमुकुरवृत्तम् भगवत्या मुखे एव दर्पणोपमाने सर्वमेव भगवान् पश्यति महादेवः। अत एव शम्भोर्दर्पणस्थानीयं भगवत्या मुखं तस्य वृत्तिमिव हस्तग्रहणयोग्यमधोभागमङ्गविशेषम्, एवंभूतं तव चिबुकम् औपम्यरहितम्

१ 'गायन्ती' इति पाठः। २ 'मपदानम्' इति पाठः। ३ 'वृन्तम्' इति पाठः।

उपमानञ्च नास्त्येव सर्वावयवेष्वपि समग्रलावण्यसुन्दरत्वाच्चिबुकस्य उपमैव नास्ति । नयन-बाहुलकादीनां कुवलयशिरीषमालाशिखिपिच्छान्युपमानवस्तूनि सुलभानि निरुपमस्य तु तव चिबुकस्य नोपमापदार्थः सुलभ इति, सर्वातिशायिगुणगणबृंहितं तव चिबुकं कथङ्कारं ब्रूमः केन प्रकारेण वर्णयामः अनुपमस्य वर्णनं दुष्करमेव ॥ ६६ ॥

**भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती,**
**तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।**
**स्वतःश्वेता कालागरुबहुलजम्बालमलिना,**
**मृणाली लालित्यं वहति यदहो हारलतिका ॥ ६७ ॥**

हे परमेश्वरि ! नित्यमनवरतं पुरदमयितुरीश्वरस्य भुजाश्लेषादालिङ्गनसौभाग्यात् कण्टकवती पुलकपालिका पूर्णाकारा तव ग्रीवा मुखकमलनालश्रियं वदननलिनकाण्डसौभाग्यं धत्ते आश्रयति, कमलस्य चेन्नालं न स्यादधस्तात्कर्दमसंसर्गो मृणालसंसर्गश्च कथन्न भवतीत्याशङ्क्याह–स्वतःश्वेता स्वभावेनैव शुभ्रवर्णा कालागरुबहुलजम्बालमलिना कालागरुससुगन्धचर्चापङ्केन मलिना सर्वतोदिग्धा हारललिता मुक्तामालामृणाली लालित्यं पङ्कसङ्कुलकाण्डाधोभागसंरूढपद्मिन्यङ्कुरसौभाग्यं यदस्मात् कारणाद्वहति तेन कारणेन ग्रीवामुखकमलनालश्रियं धत्ते इति सम्बन्धः । अहो इत्यनेनाश्चर्यपदेन सर्वाश्चर्यसौन्दर्यलक्ष्मीसम्पन्नशरीरयष्टेस्तव ग्रीवालतागतं सौन्दर्यमाश्चर्यपरम्पराधिरूढमिति मन्तव्यम् ॥ ६७ ॥

**गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे,**
**विवाहव्यानद्धप्रगुणगुणसङ्ख्याप्रतिभुवः ।**
**विराजन्ते नानाविधमधुररागाकरभुवां,**
**त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६८ ॥**

हे गतिगमकगीतैकनिपुणे ! गतिर्येनालापेन रागः सन्दर्भः, गमकः स्थायिस्वरस्य पुनः पुनः घोषणम्, गीतम् समुच्चितार्थप्रबन्धसन्दर्भः एतेषु सर्वेष्वपि निपुणे एतेषु स्थानेष्वेव सर्वं सङ्गीतशास्त्रसम्पन्नम्–"गतिस्तु रागसङ्गीते स आलापः प्रकीर्तितः । गमको मुख्यनादस्य परिभाषो रसात्मकः ॥ गीतं प्रबन्धरूढार्थं रञ्जितारक्तिरुच्यते ।" "विवाहव्यानद्धप्रगुणसङ्ख्याप्रतिभुवः" विवाहे महादेवेन कृतपाणिपीडने व्यानद्धः बद्धः प्रगुणगुणो यो मङ्गलसूत्ररूपः तस्य सङ्ख्यायास्त्रिप्रकारायाः प्रतिभुवः सादृश्यः । एतदुक्तं भवति–विवाहकाले प्रथममेव माङ्गल्यसूत्रमिति कन्यानां कण्ठे बद्ध्यते, तस्य प्रगुण गुण इति संज्ञा तेन माङ्गल्यसूत्रेण विना क्षणमपि न तिष्ठति सभर्तृका पत्युः प्राणान् स्वकीयमङ्गलसूत्राभ्यन्तरे सादरं धारयन्ति पतिव्रताः स्त्रिय इति प्रसिद्धिः । मङ्गलसूत्रस्य लक्षणं वशिष्ठेनोक्तम्–"ब्रह्मविष्ण्वीशरूपं पुरन्ध्रिवृत्तं त्रितं कृतम् । त्रिरत्नं रुक्मजं स्त्रीणां माङ्गल्याभरणं विदुः ।" अत एव माङ्गल्यसूत्रस्य गुणानां त्रिसङ्ख्यया समानास्त्रिरेखाः कण्ठस्था इति तत्साम्यमीदृग्लक्षणलक्षितास्तव गले रेखाः कथं विराजन्ते इत्यत आह–नानाविधमधुररागाकरभुवाम् नानाविधानां मधुररागाणां श्रीराम-

लहरीललिताभूपालादीनामाकरभुवामुत्पत्तिस्थानभूतानां त्रयाणां सङ्ख्यानां ग्रामाणां गान्धारमध्यमषड्जाख्यानां रागकदम्बकानां स्थितिनियमसीमान इव, स्थित्यर्थमवस्थानार्थंनियमेन विशिष्टाः सीमानः प्रदेशा नियमसीमानः, अन्योन्यकलहकारिणां सीमाविवादनिर्हरणाय देशद्वयसन्धौ दीयमानवृक्षगर्तखातशिलाकुल्यारेखादयः प्रसिद्धास्तद्वत्तव गले सदा वर्तमानानां सङ्गीतग्रामाणां स्थित्यर्थं नियमसीमान इव, गले रेखादीप्तिं प्राप्नुवन्ति । अनेन सदा सङ्गीतविद्यारसिकता भगवत्या वर्णिता ॥ ६८ ॥

**मृणालीमृद्वीनां तव भुजलतानां चतसृणां,**
**चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः ।**
**नखेभ्यः संत्रस्यन् प्रथमदमनादन्धकरिपो-**
**श्चतुर्णां वक्त्राणां सममभयदानार्पणधिया ॥ ६९ ॥**

हे परमेश्वरि ! मृणालीमृद्वीनां मृणालीवत् सरोजिन्यङ्कुरलताविशेषवन्मृद्वीनामतिकोमलानां चतसृणां चतुःसङ्ख्याविशिष्टानां "न तिसृचतसृ" इत्यनेन सूत्रेण "नामि" इति दीर्घनिषेधः, तव भुजलतानां बाहुवल्लीनां सौन्दर्यं लावण्यातिशयं सरसिजभवो ब्रह्मा कर्ता चतुर्भिर्मुखैः करणभूतैः स्तौति—लोकातिशायिगुणगणोद्घोषणमधुरशब्दकलापैश्च यासि, कथं चतुर्भिर्वदनैश्चतुर्बाहुसौन्दर्यस्तवः तस्य पञ्चमुखत्वादेकस्य मुखस्य स्वरूपनाशः कथमिति चेदत्रोच्यते—अवश्यं पञ्चमुख एव प्रथमं ब्रह्माऽभूत्, तदनन्तरं रुद्रोऽपि पञ्चमुखस्तृतीयो भ्राता द्वितीयो विष्णुः सर्वकनिष्ठस्यापि रुद्रस्य वक्त्रैः वरप्रसादषड्गुणजाता; ते च सर्वज्ञत्वं नित्यतृप्तत्वमनादिबोधत्वं स्वतन्त्रत्वमलुप्तशक्तित्वम् अनन्तशक्तित्वञ्च इत्येवमादिगुणसम्पन्ना, एतैर्विरहिता ब्रह्मादयस्तत एव हेतोर्ब्रह्मणोऽपि महादेवस्य सहस्रगुणाधिक्यमत एव न्यूनगुणेनापि ब्रह्मणा ज्येष्ठमात्रमवलम्ब्य अहमपि पञ्चमुखोऽयं रुद्रोऽपि पञ्चमुखस्ततो मत्तः कथमन्याधिक्यमिति, कदाचिद् रजोंऽशस्य महतः सम्भवादवलेपेन परतिरस्कारे जायमाने तज्जनितेन ब्रह्मणो दर्पतेजसा दह्यमाने तच्छान्त्यर्थं विरञ्चेः पञ्चमं शिरो रुद्रेण नखकोट्या विदलितमिति पुराणप्रसिद्धेश्चतुर्मुख एव न पञ्चमुखः। तत एवमेकशिरोव्यत्ययेन भीतो भूत्वा तस्य महादेवस्यात्यन्तवल्लभायास्तव सेवया पुनर्महादेवसकाशादभयं प्रार्थ्यमानस्तत एव सन्त्रस्यन् त्रासं प्राप्नुवन् कुतः प्रथमदमनात् प्रथमकृतदण्डात् अन्धकरिपोर्महादेवात् गतेभ्यो नखेभ्यः सन्त्रस्यन् अवशिष्टानां चतुर्णां शीर्षाणां सममेव युगपदेव अभयार्पणबुद्ध्या "मा भैषीरहमागतस्तव भयं नास्ति, सुस्थो भव" इत्यादिवचनेन समुत्तोलितो यो हस्तः स अभयहस्त इत्युच्यते, तस्यार्पणं प्रकाशनं तद्धिया तदभिप्रायेण रुद्रात् त्रस्यन् रुद्रसर्वस्वभूतायास्तवाश्रयेण रुद्राङ्कयं वक्ष्यामि इति भगवतीमुपाश्रितः येनकेनचित् पीडितास्तद्वल्लभाशरणप्रवेशेन तन्निवारिततत्पीडाः सन्तः सुखिनः सम्भवन्तीति लोकप्रसिद्धिरस्ति॥६९॥

**नखानामुद्द्योतैर्नवनलिनरागं विहसता,**
**कराणां ते कान्तिः कथय कथयामः कथमुमे ।**
**कयाचिद्वा साम्यं भजतु कलया हन्त कमलं,**
**यदि क्रीडालक्ष्मीचरणतललाक्षारुणदलम् ॥ ७० ॥**

हे परमेश्वरि ! नखानां करजानामुद्द्योतैः किरणनिकुरम्बैः नवनलिनरागं नूतनशतपत्रशोभां विहसतां तिरस्कुर्वतां ते कराणां पञ्चशाखानां "पञ्चशाखामयः पाणिः करो हस्तोऽथ तर्जनीति" विश्वप्रकाशः । कान्तिसौन्दर्यातिशयं कथं वा कथयामः, केन प्रकारेण वर्णयामस्त्वमेव कथय नास्माकं कथनावसरः, यत्पञ्चभिर्वदनैर्महादेवः चतुर्भिर्वदनैर्ब्रह्मा षड्भिराननैः शक्तिधरः सहस्राननैरनन्तो वासुदेवश्च अन्ये चानेकमुखा बहवो देवतेश्वराः तां वर्णयितुमारभ्य निजवर्णनावैदग्ध्यदर्पेण स्तुवन्तस्त्वच्चरणाङ्गुष्ठैकदेशस्य कान्तिमियत्तया वर्णयितुं न पारिताः, तव तादृशानां त्वत्कराणां सौन्दर्यवर्णनमस्मादृशफल्गुजनानां सुकरं वा दुष्करमिति त्वमेव जानासि त्वमेव कथय, एवमनुपमत्वेन वर्णनावतारो वा कथं भवतीति शङ्कायामाह—यथाकथञ्चित्सादृश्यं सम्पादयति क्रीडालक्ष्मीचरणतललाक्षारुणदलं क्रीडत्या विहरन्त्या लक्ष्म्याः श्रीदेव्याश्चरणतललाक्षया अरुणदलमरुणीकृतपत्रं यदि भवति, कदाचित् कमलं तदा कयाचित् कलया केनापि प्रकारेण साम्यं सादृश्यं भजतु, नान्यथा लक्ष्म्याः सर्वथा समाश्रयणात् अतिरिक्तं सरसिजं भवति । कमलेषु भगवत्याः शक्तिपातो लक्ष्मीरेव सा च लक्ष्मीर्भगवत्येकजन्मभूमिर्भगवतीरूपेति कृत्वा तच्चरणलाक्षानुलिप्तकमलौपम्यं लोकोत्तरस्य भगवतीवदनस्यानुचितमिति न मन्तव्यम् ॥ ७० ॥

समं देवीस्कन्दद्विपवदनपीतं स्तनयुगम्,
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।
यदालोक्याशङ्काकुलितहृदयो हासजनकः,
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति[1] ॥ ७१ ॥

हे परमेश्वरि ! समं युगपदेव स्कन्दद्विपवदनपीतं स्कन्देन कार्तिकेयेन द्विपवदनेन गजपतिना पीतमास्वादितं सततं प्रस्नुतमुखं सर्वदा प्रसरत्स्तन्यदुग्धभरितं, प्रस्नवो नाम प्रसूतानां स्त्रीणामपत्यदर्शनात् स्तनमुखाद् दुग्धस्य निःस्यन्दः, एवंभूतं तव स्तनयुगं नः अस्माकं खेदं हरतु । तदेव विशिनष्टि—यः स्तनयुगलमालोक्य आशङ्काकुलितहृदयः आशङ्कया अन्यथा वितर्केणाकुलीकृतं हृदयं यस्य स तथोक्तः, हासजनकः अत एव सर्वेषां हासं जनयति । तव कुचौ दृष्ट्वा स्वकीयमस्तकभ्रान्तिं कृत्वा स्वशिरः स्पृशन् हासजनको भवति, एवंभूतो हेरम्बः हे इति रम्बते गर्जतीति हेरम्बः, "रम्बिलविगर्जायाम्"-मिति धातोः 'अच्'प्रत्यये "इदितो नुम् धातोः" इति नुमागमे हेरम्बः, तेन करेण झटिति शीघ्रं कुम्भौ निजमस्तकौ परिमृशति, तिष्ठति न वेति स्पृष्ट्वा परीक्ष्यते । अत्यन्तमेव गजकुम्भसादृश्यं भगवत्याः स्तनयोरित्यभिप्रायः ॥ ७१ ॥

अमू ते वक्षोजावमृतरसमाणिक्यकलशौ[2],
न सन्देहस्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसङ्गमरसौ[3],
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥ ७२ ॥

---

१ 'झडिति' इति पाठः । २ 'कुतुपौ' इति पाठः । ३ 'सङ्गरसिकौ' इति पाठः ।

हे नगपतिपताके ! पर्वतश्रेष्ठस्य हिमवतः कुलकीर्तिप्रख्यापननिपुणवैजयन्ति, अमू ते वक्षोजौ स्तनौ अमृतरसमाणिक्यकलशावेव सुधासम्पूरितकुम्भावेव, अत्र न सन्देहस्पन्दः संशयस्य स्पन्दो लेशोऽपि मनसि नोऽस्माकं न वर्तते । यतस्ते स्तनमण्डलयोरतिदृढकारण-सद्भावात् अमृतरसकुम्भत्वं न व्यभिचरति, तदेव कारणमाह—तौ कुम्भौ पिबन्तौ अत एव नित्यकुमारौ तेनैव कारणेन अविदितवधूसङ्गमरसौ अज्ञातो वधूसङ्गमस्य स्त्रीसम्भोगस्य रसः सुखानुभवो याभ्यां तौ तथोक्तौ, द्विरदवदनक्रौञ्चदलनौ—द्विरदवदनो गणपतिः, क्रौञ्च-दलनः कार्तिकेयः तावुभौ तादृशतवकुचकलशप्रसरद्बहुतरपीयूषपानजनितसञ्जातनित्य-बाल्यावद्यापि वर्तेते यस्मात्कारणात् अतः सुवर्णघटत्वं तव कुचयोः सिद्धम् । ननु महा-गणेशस्याङ्काधिरूढा महालक्ष्मीसिद्धिः काचन देवी श्रूयते कार्तिकेयस्यापि महेन्द्रकन्या देव-सेनानामापरवल्लभेति श्रूयते, तत्कथं विरुद्धमेतदिति आशङ्कायामाह—देवतानां खलु बहुयो मूर्तयः प्रसिद्धाः तत्तद्देशकालेषु भक्तानामिष्टप्रदानं तत्कार्याय शत्रूणां विनाशहेतवे च बहुधा स्वेच्छया सृष्टाः सिद्धिमत्यो देवता वपूंषि धारयन्ति त्यजन्ति च, एकमूर्तिकृतस्वभावो मूर्त्यन्तरेण घटत इति नात्र दोषः । भगवता पुरुषोत्तमेन एकस्मिन् रामाख्यशरीरे एक-दारव्रतत्वं निर्मलस्वभावत्वञ्चाङ्गीकृतम्, कृष्णावतारे बहुस्त्रीसम्भोगित्वं मायापरायणत्वञ्च कृतम् ॥ ७२ ॥

> वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः,
> समारब्धां मुक्तामणिभिरमलां हारलतिकां ।
> कुचाभोगो विम्बाधररुचिभिरन्तःशबलितां,
> प्रतापव्यामिश्रां पुरविजयिनः कीर्तिमिव ते ॥ ७३ ॥

हे अम्ब जगज्जालजननि ! स्तम्बेरमदनुजकुम्भप्रकृतिभिः स्तम्बेरमाकारस्य हस्तिरूप-धरस्य दनुजस्य दानवोत्तमस्य कुम्भौ मस्तकावेव प्रकृतिः जन्मस्थानमेवान्तैस्तथोक्तैः, "प्रकृति-प्रधाने स्यात् स्वभावोत्पत्तिदशयो"रिति विश्वप्रकाशः । "जनिकर्तुः प्रकृति"रिति पाणिनिसूत्रं च "इभस्तम्बेरमः पद्मो यूथनाथस्तु यूथपः" इत्यमरः । ईदृशैरेव मुक्तामणिभिः समारब्धां प्रथिताममलं निर्मलं किञ्च विम्बाधररुचिभिः अधरविम्बकान्तिनिकुरम्बैः मध्ये शबलितां भिन्नवर्णीकृतां तदा प्रतापव्यामिश्रां प्रतापेन वीरपुरुषविशेषधर्मेण कविसमयाद्रक्तवर्णेन व्यामिश्रां सङ्गतां पुरविजयिनो महादेवस्य कीर्तिं यशोमञ्जरीमिव कीर्तेरपि कविसमयसिद्धेः शुक्लवर्णता जगदेकवीरस्य महादेवस्य अन्यसमस्तसुरवीरावध्यमहागजासुरमारणद्वारा भगवतो यः प्रतापो या च कीर्तिः समुत्पादि तद्युगलीमिव मूर्तिमती तव कुचाभोगः स्तनमण्डलो हारलतिकां वहति । चण्डः कीर्तिप्रतापयोः सन्ततधारणं सङ्कीर्तनद्वारपतिव्रतानां प्रसिद्ध-मिति भावः । तथोक्तमितराभरणेनापि शत्रुमारणलक्षणं तदाहृतपदार्थेन गुम्फितं भूषणं वरमिति कृत्वा भगवत्या इतरमुक्तामालाभ्यः स्वभर्तृमर्दितगजासुरमस्तकोत्पन्नमौक्तिकसम्पन्न-हारलतैवातिवल्लभेत्यभिप्रायः ॥ ७३ ॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः,
पयःपारावारः परिवहति सारस्वत इति ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्,
कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७४ ॥

हे धरणिधरकन्ये ! पर्वतराजकुलचन्द्रिके ! परमेश्वरि ! तव स्तन्यं स्तनोद्भूतं दुग्धं "शरीरावयवाद्यत्" इति 'यत्' प्रत्ययः, यत् स्तन्यं कर्म सारस्वतः सरस्वतीसम्बन्धी यः पारावारः क्षीरसमुद्र इव परिवहति समन्ततः प्रवहति इति मन्ये, अत्र हृदयत इत्यनेन शब्देन हृदयोद्भूतोऽन्यदेवतासाधारणः परमेश्वरैकवृत्तिः आत्मीयभक्तजनेषु निरुपाधिकस्नेहरसनिःष्यन्द उच्यते, तत्प्रभावादेव स्तन्यस्य लोकातिशायिचेष्टाविशेषं प्रतिपादयति—दयावत्या करुणावत्या त्वया दत्तं प्रतिपादितं यदेव स्तन्यम् आस्वाद्य परिपीय द्रविडशिशुः सम्बन्धनाम्ना काञ्चीदेशोत्पन्नः महाकविः प्रसिद्धः तस्य खल्वेवं श्रूयते—कार्तिकेय एव कुतश्चित् मुनिशापान्मनुष्यजन्मगन्तुकामः कस्याश्चिद्ब्राह्मण्या दरिद्राया उदराज्जातः, स बालकः षण्मासमात्र एव पितरि भिक्षार्थं बहिर्गते मातरि च पानीयाहरणार्थं नदीं प्रस्थितायामतिदारिद्र्याद् दासदासीजनलोकाभावात् एकः सन् रुदन् कुत्रापि गन्तुमशक्तः क्षुधापीडितः क्रन्दनातुरो भवनाङ्गणोपरि भ्रमन् यदृच्छया गगनमार्गेण भर्त्रा सह विहरन्त्या पार्वत्याः सकरुणं दृष्टः, तथा च भूमाववतीर्य सस्नेहकरुणमिमं बालकमुत्तोल्य धूलिं परिमृज्य बाष्पमपनीय स्तन्यमम्बया तस्मै बालकाय प्रतिपादितं च भूमौ निःक्षिप्य भगवत्यां गतायां तत्क्षणादेव सम्बन्धकवीश्वरस्य वदनारविन्दात् अनन्तकोटिदिव्यकाव्यप्रवाहाः सम्पन्नाः, इति काञ्चीदेशे प्रामाणिकेयं भणितिः प्रसिद्धा एतदेव प्रति यत्तव स्तन्यमास्वाद्य प्रौढानां निर्दोषकाव्यसहस्रकरणनिपुणानां कवीनां वर्णयितॄणां मध्ये कमनीयः समस्तलोकश्लाघनीयः, वाग्गुम्फमहिमा कवयिता महाकविरजनि जातः, काव्योपवर्णन इति धातुरदन्तश्चुरादिगणे पठ्यते । कवयतीति कवयिता प्रबन्धकर्ता तृजन्तः ॥ ७४ ॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा,
गभीरे ते नाभौ सरसिकृतसङ्गो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका,
जनस्तां जानीते जननि तव रोमावलिरिति ॥ ७५ ॥

हे अचलतनये पर्वतराजन्यनन्दिनि ! अथवा 'अचला' अविनाशा इन्द्रादिलोकपालवत् विनाशरहितास्तनया ब्रह्मविष्णुरुद्रा यस्याः सा, अचलतनया तत्सम्बुद्धौ हरक्रोधज्वालावलिभिः महादेवकोपपावकहेतिमालाभिः अवलीढेन व्याप्तेन वपुषा शरीरेण सह मनसिजः कन्दर्पः कर्ता तमात्मनः शरीरसन्तापमसहमानः सन् गभीरे अत्यन्तगाम्भीर्यगुणयुक्ते ते नाभिसरसि परमानन्दहेतुभूतलावण्यामृतसञ्चरिते मध्यविवरे शीतलतटाकायमाने प्रायेण कृतसङ्गे मग्नो जातस्तस्मान्नाभिप्रदेशाद् धूमलतिका काचन समुत्थिता समुत्तस्थौ तप्तायःपिण्डसंयोगात् धूमोत्पत्तिर्जायते इति प्रसिद्धिः, तां तव धूमलतिकां रोमावलिरिति

रोमराजिरिति जनः सर्वो लोको जानीते। अत्र जननीशब्दसम्बोधनात् दोषदर्शने पित्रा ताडितः पुत्रो यथाक्रन्दनं मातुरङ्कमभ्युपेत्य हृष्टो भवति, तथा समाधिभङ्ग-कुपितपिनाकपाणिललाटलोचनावलशुष्यमाणशरीरतः सकललोकानन्ददायी मन्मथः त्वां शृङ्गारामृतवेणीपरिपूर्णनाभिकुण्डां प्रस्तुतस्तनीं मातरमेवोपगम्य—भगवतीमुपगम्य परित्यक्तसकलपरितापो जात इति व्यज्यते। लोके खलु मात्रा ताडितः पुत्रः पितरमुप-सर्पति, पित्रा ताडितो मातरं तत्साम्यमत्रापीत्यर्थः। मन्मथं प्रति मातृत्वञ्च परमेश्वर्याः कटाक्षविक्षेपादुत्थितो मकरकेतन एतत्पूर्वं दग्धोऽनेकधा पुनर्जन्म प्राप्तवान् इति प्रसिद्ध्या गम्यते। उक्तं वास्तवे—"दग्धं यदामदनमेकमनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार। धत्ते तदा प्रभृति देवललाटनेत्रं सत्येन्द्रियैव मुकुलीकृतमिन्दमौलिः॥" अत्र त्वागमार्थ-संवादेऽपि "कामोत्थितो यतो जातस्तस्याः कामेशयोषितः। कामाक्षीति ततः ख्यातिं सा गता काञ्चिकापुरे"॥ ७५॥

यदेतत्कालिन्दीतनुतरतरङ्गाकृतिशिवे,
कृशे मध्ये किञ्चिज्जननि तव तद्भाति सुधियां।
विमर्दादन्योऽन्यं कुचकलशयोरन्तरगतं,
तनूभुतं व्योम प्रविशदिव नाभिं कुहरिणीं॥ ७६॥

हे शिवे भक्तलोककल्याणदायिनि! कालिन्दीतनुतरतरङ्गाकृति यमुनायाः सूक्ष्मवीचिमव-गाहमानं यदेतत् किञ्चिन्नीलरेखात्मकं वस्तु तव कृशे मध्येऽतिकृशिमशालिनि अवलग्नभागे भाति दीप्तिपूर्वकमात्मसत्तां लभते, तद्वस्तु रोमजित्स्वरूपं किमिव किम्भूतमिव सुधियां शोभनबुद्धीनां भाति प्रतिभासते तत् किञ्चिद् रूपम् उत्तरार्द्धेन वदति—अन्योऽन्यं परस्परं कुचकलशयोः स्तनमण्डलयोः विमर्दात् सङ्घर्षणात् तनूभूतं चूर्णीभूतम् अधस्तात् पतदञ्जन-लोहितसलिलधारान्यायात् व्योमेवाकाशमिवाकाशस्य कविसमयप्रसिद्धा नीलवर्णत्वं कुहरिणीं अभ्यन्तरगम्भीरप्रदेशयुक्तां नाभिं शरीरमध्यस्थानावटभूमिं प्रविशदिव भाति एकत्र प्राप्तो-पद्रवस्य ततो निर्गत्य गच्छतो निरुपद्रवदेशाश्रयणमुचितमेवेति शेषः। यतः परिमिते ब्रह्माण्डमण्डले त्वत्कुचमण्डलताण्डवखण्ड्यमाननभोमण्डलं ब्रह्माण्डसहस्रधारणयोग्यां निरुप-द्रवस्थानभूतां तव नाभिमेव सुखमनुभवितुं तदुन्मुखीभवतीत्यभिप्रायः॥ ७६॥

स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता,
तलावालङ्कुण्डं कुसुमशरतेजो हुतभुजः।
रतेर्लीलागारं किमिति तव नाभीति गिरिजे,
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते॥ ७७॥

हे गिरिजे पार्वति! तव नाभीति प्रख्यातं नाभिरूपेण वर्तमानं गिरिशनयनानां महादेव-लोचनानामानन्दसिद्धिः, यत् सौधवकारणभूतं गुहारूपं बिलद्वारं यत्तव तिष्ठति तद् गृहीत्वा नानाप्रकारेण कवयः प्रामाणिकतयैवोत्प्रेक्ष्यते, लौकिकोत्प्रेक्षा तु वर्णनात्मकत्वादप्रामाणि-क्येव भगवत्यान्तु उत्प्रेक्षया वर्णयितुमसम्भव एव विद्यमानमेव, तस्या वर्णयितुं ब्रह्मविष्णु-

रुद्रादिभिरशक्यं ताश्चोत्प्रेक्षाः क्रमेण दर्शयति—स्थिरो गङ्गावर्तः स्थिरः अचलः गङ्गायाः सलिलावर्तः सलिलविभ्रमणं किमेतदिति अन्या उत्प्रेक्षा स्तनावेव मुकुलौ यस्याः स्तनमुकुलरोमावलिलता रोमराजीरूपिणी वल्लरी, तस्यास्तले अधःप्रदेशे आवालं पानीयप्रदानाय मृत्तिकारूपाविष्ठा वा । अथोत्प्रेक्षान्तरमाह—कुसुमशरतेजोहुतभुजः—कन्दर्प-प्रतापाग्नेरनवरतप्रज्वलनार्थं वर्तुलाकारं कुण्डम् वा किमिति किमिति इति पदद्वयं सर्वत्रो-त्प्रेक्षासु विजयते, सहशब्देन सम्बध्यते पुन उत्प्रेक्षान्तरम्, रतेः कामदेवस्य पत्न्या लीलागारं क्रीडामन्दिरं वा लीलागारं वा खलु द्वारप्रदेशे सुघटितं सङ्कुचितम् । अभ्यन्तरे गम्भीराभोगसुन्दरं नाभिपुटमिति तथैवोत्प्रेक्ष्यते ॥ ७७ ॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो,
नमन्मूर्तेर्नाभौ वलिषु शनकैस्त्रुट्यत इव ।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा,
समावस्थास्थेम्नो भवतु कुशलं शैलतनये ॥ ७८ ॥

हे शैलतनये पार्वति ! निसर्गक्षीणस्य स्वभावत एव कृशिमशालिनस्तदुपरि स्तनतटभरेण क्लमजुषः क्लान्तियुक्तस्य अत एव हेतोः नमनमूर्तेः भारसहिष्णुताविरहेण प्रह्वीभूतवपुषः नाभौ अन्तःशून्यतया सुदृढावलम्बनदेशरहितायां वलिषु च अन्योन्यमसंसर्गेण दृढाश्लेषविरहितासु अत एव दुर्बलासु शनकैर्मन्दं मन्दं त्रुट्यत इव भङ्गुरीभावं भजत इव, अनेन क्रमेणात्यन्त-मस्थिरतामापन्नस्य तदा त्रुटिततटिनीतीरतरुणा प्रावृषेण्यप्रबलजलप्रवाहसाटोपमोदित-छिन्नमूलबन्धनदीतटसंरुहवृक्षेण सह समा अवस्था देहधारणात्मिका दशैव दशा यस्य स्थेम्नः स्थिरत्वस्य तस्य समावस्थास्थेम्नः मध्यस्य तव मध्यभागस्य सर्वदा कुशलं भवतु । तदकुशलत्वे हि अनन्तकोटिब्रह्माण्डमण्डलानामवस्थानप्रदेशाभावात् जगत्सृष्टिरपि भगवता न कर्तव्यैव स्यात् । सृष्ट्यभावे च सर्वेषामनन्तकोटिसङ्ख्यानामात्मनां लिङ्गशरीरपरिग्रह-पूर्वकनानायोनिशरीरभोगं विना भोगमोक्षादिसिद्धिरपि अकुड्यचित्रवत् अविद्यमानैव स्यात्, तद्दोषपरिहाराय सकललोकसवित्र्याः पार्वत्याः मध्यस्य कल्याणाशंसनमवश्यमुचितमेवेति भावः ॥ ७८ ॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजान्,
नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे ।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं,
नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥ ७९ ॥

हे पार्वति पर्वतराजपुत्रि ! क्षितिधरपतिः हिमवान् पर्वताधिपतिः कर्ता विवाहसमये निजात् नितम्बात् कटकप्रदेशात् आच्छिद्य बहिःकृत्य । किं तत् ? । गुरुत्वं निविडावयवत्वं विस्तारं विशालभावत्वं नितम्बात् पृथक्कृत्य त्वयि भवत्यां हरणरूपेण यौतकरूपेण "विवाहादिषु यद्देयं सहायो हरणं च तत्" इत्यमरः । "कन्यानां परिणये पित्रा वा भ्रातृ-भिश्च बन्धुभिः स्त्रीधनरूपं यद्देयं तन्निगदन्ति हरणमित्याचार्याः" इति रुद्रभट्टः । तथा च

रघुवंशे कालिदास इन्दुमतीविवाहप्रसङ्गे–"सत्त्वानुरूपं हरणीकृतश्रीः" इति । त्वयि हरणरूपेण निदधौ मौनाकारेण निवेशितवान् प्रायेणेति उत्प्रेक्ष्यते । अत एव कारणान्वितम्वप्राग्भारं जघनभारः "प्राग्भारश्चैव भारश्च तथार्थान्तः समार्थकः ।" इति विश्वप्रकाशः । विस्तीर्णः विशालगुणयुक्तः गुरुः गौरवगुणशाली सन् अशेषामपि वसुमतीं सर्वामपि भूमिमाच्छादयति आवृणोति, लघुत्वं नयति च लाघवाधारतामापादयति, अयमीदृशगौरवशाली तव जघनभारः प्रसिद्ध एवेति यावत् । न केवलं तव नितम्वं पित्रा हरणीकृतं गुणतया प्रसिद्धम्, अपि तु देवीमाहात्म्ये सर्वदेवतेजःसम्भवां त्वां कथयता भगवता मार्कण्डेयमहामुनिना "वारुणेन च जङ्घोरू नितम्बस्तेजसा भुवः ।" इति भूमिदेव्यास्तेजसा सम्पादितं तव जघनमिति प्रतिपादितम् । तेनापि प्रकारेण त्वन्नितम्बेनात्तसारा भूमिः कृतेति उभयथा त्वन्नितम्वाद् भूमेर्लाघवं विशालता हानिश्च सम्पन्नं द्वयमपि द्योतितम् ॥ ७९ ॥

कुचौ सद्यःस्विद्यत्तटघटितकूर्पासभिदुरौ,
कषन्तौ दोर्मूले कनककलशाभौ कलयतां ।
तव त्रातुं भङ्गादलमिति विलग्नं तनुभुवा,
त्रिधा वद्धं देवि त्रिवलिलवलीवल्लिभिरिव ॥ ८० ॥

हे देवि ! यस्य महादेवस्य पट्टमहिषि ! सद्यस्तत्क्षणादेव स्विद्यतोः यौवनमदोष्मणः स्वेदजलं मुञ्चतोस्तटयोः कुचतटयोः घटितस्य निवेशितस्य कूर्पासस्य चीनांशुककञ्चुकस्य भिदुरौ, दोर्मूले वाहुमूले कषन्तौ यौवनारम्भवेगेन व्याप्नुवन्तौ तव कुचौ पयोधरभारौ कनककलशाभौ गुरुतरसुवर्णकुम्भप्रतिमौ कलयता तनुभुवा कामेन । "तनुभूस्तनये कामे" इति विश्वः । तेन खलु एवं विचारितं भगवत्याः स्तनौ खलु स्वभावतः कठिनौ यौवनारम्भगम्भीरौ तदुपरि सुवर्णकलशवद् गुरुतरौ एतयोर्भारेण मध्यस्य भङ्गो यदि भविता सर्वमेव मम शृङ्गारसर्वस्वमपहारितं स्यात्, एतदुत्पन्नत्वादेव समस्तलोककामिनी शृङ्गारसम्पत्तेरेतन्मध्यसंरक्षणमवश्यं कर्तव्यम्, ममैतत्कुचाभारपीडनाद् विलग्नं मध्यभागं त्रातुं रक्षितुमिदं त्रिवलीमयरज्जुवन्धनमेवालं समर्थं इति विचार्य हे देवि ! तेनैव कामदेवस्त्रिवलिवल्लिभिस्तिसृभिर्मध्यरेखाभिरेव लवलीवल्लिभिः, लवली नाम लावण्यपाण्डुरवर्णः कोमलः प्रेक्षणीयकान्तिः लताविशेषः प्रसिद्ध एव ताभिस्त्रिवलीवल्लिभितद्विलग्नवद्धमिव तथा च उद्यानादौ बालवृक्षाणां प्रथमप्रथमविटपोद्भेदसमये वाताद्युपद्रवसहिष्णुभावाय उद्यानपालकैः रज्जुवन्धनं क्रियते तथा बालवृक्षकोमलविटपिनां दृढावस्थानमुपरिवद्धनोन्मुख्यं च प्रसिद्धं तत्साधर्म्यमत्रापीत्यभिप्रायः ॥ ८० ॥

करीन्द्राणां शुण्डान्कनककदलीकाण्डपटली-
मुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवती ।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते,
विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥ ८१ ॥

हे गिरिसुते धरणिधरतनये ! करीन्द्राणां गजश्रेष्ठानां शुण्डान् कर्मभूतान् हस्तान्, किञ्च कनककदलीकाण्डपटलीञ्च सुवर्णरम्भास्तम्भसमूहञ्च उभाभ्यामूरुभ्यां सक्थिदण्डाभ्यां "सक्थि क्लीबे पुमान् रूप"मित्यमरः । उभयमपि करिहस्तकदलीकाण्डद्वयमपि निर्जित्य सुवृत्ताभ्याम् शोभनवर्तुलाकारयुक्ताभ्यां पत्युः महादेवस्य प्रणतिसमये कठिनाभ्यां कठिनभूमिसम्पर्कात् सञ्जातकाठिन्यगुणाभ्यां प्रमाणकठिनाभ्यां जानुभ्यां ऊरुजानुमध्यसपिण्डकाभ्यां विबुध-करिकुम्भद्वयमपि ऐरावतमस्तकयुगलमपि भवती कर्त्री विजिग्ये जितवती, "विपराभ्यां जेः" इति विपूर्वस्य जयतेरात्मनेपदे लिटि रूपम्—विजिग्ये इति । कवयः खलु उत्तमस्त्रीणां जानुपिण्डकौ सुघटिततया वर्तुलाकारेण पञ्चाङ्गप्रणामवेलायामन्योन्यसंस्पृष्टतया करिकुम्भ-साम्यं वर्णयन्ति । गुणतः कान्तित आकारतो वा समुच्चितैर्वा व्यस्तैर्वा काव्येषु काञ्चयवय-वानामुपमानेन सह उपमेयभावः प्रसिद्धः ॥ ८१ ॥

पुरा जेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते,
निषङ्गौ ते जङ्घे विषमविशिखो बाढमकृत ।
यदग्रे दृश्यन्ते सितशरफलाः पादयुगली,
नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥ ८२ ॥

हे गिरिसुते हिमनाथवंशदीपिके ! पुरा पूर्वस्मिन् काले रुद्रं महादेवं स्वस्य जेतारं त्वत्कटाक्ष-कोणजन्मसामर्थ्यादलङ्घनीयपराक्रममाहात्म्ययोगं विषमविशिखः कामदेवो जेतुं पराभवितुं द्विगुणशरगर्भः स्वयं पञ्चबाणत्वात् एतावद्भिः शरैरजेयोऽयमिति, द्विगुणानेव निजपञ्च-शरान् कृतवान्, जङ्घे एव द्विगुणशरगर्भौ निषङ्गौ बाढं निश्चयेन अकृत कृतवान् । तदेव विशिनष्टि—यदग्रे ययोरनङ्गनिषङ्गतामापन्नयोरग्रे चरणाङ्गुलिभागे शितशरफला—शितानां तीक्ष्णानां शराणां बाणानां फलानामग्रभागाः "फलं प्रयोजने क्लीबं तरूणां प्रसवेऽपि च । शराग्रे तु फलाः पुंसि कृत्ता लोहशलाकया ।" इति विश्वः । कथं तेषां शरत्वं ज्ञातं ? । सुर-मुकुटशाणैकनिशिताः नमस्कारसमये महेन्द्रादिमुकुटकोटिषु शाणाद् घर्षणाद् तीक्ष्णीभूताः शरादीनां शाणघर्षणं प्रसिद्धम्, तेनैकैकनिशिता मुख्यतया तीक्ष्णीभूता यतो दश शरा दृश्यन्ते ततो निषङ्गसाधर्म्यं तव जङ्घयोरित्यर्थः, पादयुगली नखाग्रछद्मान इत्यनेन नखा इति व्याजमात्रं शरा एव निःसरन्ति, त्वच्चरणबलादेव त्रिभुवनविजयी तावदनङ्गः प्रसिद्धः ॥ ८२ ॥

श्रुतीनां मूर्द्धानो दधति तव यौ शेखरतया,
ममाप्येतौ मातश्शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी,
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८३ ॥

हे मातः त्रिभुवनजननि ! श्रुतीनां वेदानां मूर्द्धानः अन्तभागाः उपनिषल्लक्षणाः यौ तव चरणौ पादारविन्दे कर्मणी शेखरतया उत्तंसरूपेण दधति वहन्ति, सर्वासामुपनिषदां तात्पर्यार्थः खलु भगवतीचरणारविन्दस्तुतिरेव, अत एव शेखरतया प्रतिपादनं तावेतौ

चरणौ यथाश्रुति शिरसि न्यस्तौ तथा ममापि शिरसि दयया कारुण्यवशाद् देहि निवेशय, अनादिसिद्धानां परब्रह्मस्वरूपाणां वेदान्तवाक्यानां साधर्म्यं मम त्वद्भक्तस्य परमार्थतः कथमिति चेत्तत्रोच्यते–यादृशी वेदे तव दया तादृश्येव भक्तजने न विशेषः कोऽप्यत्र। अयमर्थो देवीसूक्ते प्रतिपादितः–"यं कामयते तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ।" भगवत्याः प्रतिज्ञेयं यं भक्तमहं महात्मानं कर्तुं कामये इच्छामि तमुग्रं महादेवं करोमि, किञ्च तं ब्रह्माणं करोमि, किञ्च तमृषिं बदरिकाश्रमवासिनमनादिमुनिं नारायणमपि करोमि, यदि वा मोहयामि लोकं ब्रह्माणमपि कीटकमपि सममेव मोहयामि, तादृशीं मां वरदेवतां विहाय मदुत्पादितासु देवीसूक्तेषु ऋग्वेदमध्यस्थितेषु स्वमाहात्म्यसूचकानि अन्याभिर्देवताभिर्मनसाप्यचिन्तनीयानि प्रतिज्ञावचनानि महाप्रामाणिकानि श्रूयन्ते, एतदेव चरणद्वयेन विशिनष्टि–ययोश्चरणयोः पशुपतिजटाजूटतटिनी शिवजटामुकुटवर्तिनी गङ्गैव पाद्यं पाथः पादप्रक्षालनार्थं जलम्। "पाद्यं पाथवारिणि" इत्यमरः। 'पाद्य'शब्देन प्रणयकलहोपशान्तये यथा भगवता नमस्कारः क्रियते तथापि नतमुकुटविस्तरेण गङ्गाजलेन क्षालनं भवति। ननु पत्युः प्रणतिकठिनाभ्यामिति व्यतिक्रान्ते श्लोके भगवत्येव भगवतीनमस्कारः प्रत्यपादि, अधुना भगवतो नमस्कारो भगवत्यां तद्वैपरीत्यमेव कथमिति चेदुच्यते–"समप्रधानौ समसत्त्वौ समौजसौ" इति त्रिपुरोपनिषदुक्तार्थरीत्या नमस्कार्यनमस्कारभावः साधारण एव शिवशक्त्योः। उक्तं च कविसार्वभौमेन "परस्परफलसम्पत्समुल्लसितपरस्परौ। प्रपञ्चमातापितरौ प्राचौ जायापती स्तुमः"। इति अलौकिकं तावद् भगवत्याः पाद्यजलं समुपलब्धं प्रक्षालनानन्तरं लाक्षारञ्जनमपि अलौकिकमपि अलौकिकमेव प्रतिपादयति, तयोश्चरणयोर्लाक्षालक्ष्मी यावकसम्पत् "राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः।" इत्यमरः। अरुणहरिचूडामणिरुचिः हरेः पुरुषोत्तमस्य अरुणचूडामणिरुचिः मुकुटरत्नदीप्तिरेव लाक्षा, अत्रापि पुरुषोत्तमस्य भगवतीं प्रति नमस्कारवेलायामेव चरणयोर्मुकुटमणिसम्पर्क इति द्योत्यते, न केवलं महादेव एव नमति, अपि तु "सर्वदेवनमस्कारः केशवं प्रति गच्छति।" इति पुराणप्रामाण्यात् सर्वलोकनमस्कार्यो भगवान् पुरुषोत्तमोऽपि स्वकार्यसम्पत्तिहेतवे भगवतीं प्रणमति ॥ ८३ ॥

हिमानी हन्तव्यं हिमगिरिनिवासैकचतुरो,
निशायां निद्राणं निशि च परभागेन विशदौ।
परं लक्ष्मीपात्रं श्रियमभिसृजन्तौ समयिनां,
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किं ॥ ८४ ॥

हे जननि त्रिभुवनसावित्रि! त्वत्पादौ तव चरणौ समग्रगुणसम्पन्नौ न्यूनगुणसरोजं जयत इति किञ्चित्रम्। कुतः?। सरोजं कीदृक्, चरणौ कीदृशौ इत्याह–सरोजं तु हिमानी हन्तव्यं तुहिनवर्षणेन नष्टकान्ति। "हिमानी हिमसन्ततिः।" इत्यमरः। तव चरणौ तु हिमगिरितटाक्रान्तरुचिरौ हिमप्रधानस्य गिरेः तटक्रान्तावपि कण्टकसञ्चारेऽपि रुचिरौ अनुपहतसौभाग्यौ, पुनः कमलं निशायां रात्रौ निद्राणं निमीलितं, तौ तु निशि च रात्रावपि पर-

भागेन विरुद्धे कान्तिसंसर्गात् विशदौ कमनीयौ, रात्रिः खलु तमोवहुलत्वात् श्यामवर्णचरणयोः सहजपाटलकान्तिसम्बन्धात् विरुद्धवर्णविन्यासे सति यः कमनीयः कान्तिविशिष्टः स 'परभाग' इत्युच्यते। पर उत्कृष्टश्चासौ भागो भक्तिश्चेति परभागः "परभागो भवेद्वर्णद्वय-संसर्गजा रुचिः।" इति मम्मटाचार्यः। अत एव रात्रौ विशेषेण सुन्दरौ कमलन्तु परं केवलं लक्ष्म्याः श्रियः पात्रम् अवस्थानस्थलं न तु तस्य दाने वा विनियोगे वा क्षमम्। यः कृपणो बहुतरधनं प्राप्य केवलं निक्षेपादेव रक्षति न विनियुङ्क्ते न भुङ्क्ते। भोगत्यागहीनं च तद्धनमन्यैर्वा नीयते नष्टं वा भवति, इत्यनित्या सा पद्मगता लक्ष्मीः कस्यापि अनुपकारिणी भूत्वा हेमन्ते हिमवर्षेण नश्यति, त्वत्पादौ तु समयिनां समयवर्तिनां परमेश्वरीसिद्धान्तमार्ग-प्रवेशिनां श्रियमैश्वर्यसम्पदञ्च अतिसृजन्तौ अत्यन्तमेव ददानौ यन्मनसा काङ्क्षितं ततोऽप्यधिकतरमभ्युदयवृन्दं ददावित्ययमर्थोऽतिशयेन प्रतिपाद्यते—चण्डिका खलु सुरथनाम्ना राज्ञा—"तेन वव्रे ततो राज्यमविभ्रंशन्यजन्मनि। अत्रैव च निजं राज्यहतशत्रुवलं बलात्।" इत्यनेन श्लोकेन कोलाविध्वंसिभिर्यवनैः शत्रुभिर्यद् राज्यमाक्रान्तं पुरुषक्रमागतं तदेवान्य-स्मिन् जन्मनि अविभ्रंशि शत्रुभिरनष्टाधिकारमेव याचमानेन प्रार्थिता परमेश्वरी त्वमिन्द्र-समानाधिकारसौभाग्यैकसप्ततिचतुर्युगपरिमितमन्वन्तरदीर्घकालसुखसम्भोगोचितपञ्चाशत्-कोटिविस्तीर्णभूतं मण्डलैकाधिपत्यसूचकसाम्राज्यच्छत्रशोभितमहाभ्युदयं मनुत्वराज्यमेव दत्तवती। अत एव चिन्तिताधिकप्रदौ चतुरौ तव चरणौ न सन्देह इति निश्चितम्। अत्र समयशब्देन भगवत्याः सिद्धान्तः प्रतिपाद्यते। कोऽयं भगवती सिद्धान्तो नाम? उच्यते—यस्मिन् काले भगवता महादेवेन ललाटलोचनपावकज्वालया त्रिभुवनानन्दकारी मन्मथो भस्मसाद्भूतः, तद्भस्मनः सकाशात् सकललोकध्वंसनस्वभावो वन्धनामा महासुरस्त्रैलोक्य-कण्टको जातः, तस्य रोमकूपेभ्योऽनन्तकोटिराक्षसा जातास्तैरदृश्यतां प्राप्तैः पापाचारै-रसुरैस्त्रिभुवनेषु सर्वेषां शरीराणि व्याप्य कामानन्दे हेतुभूतानि तेजांसि पीतानि, तपः-प्रभावमूलानि शृङ्गारयौवनसौन्दर्यहासविलासपरिहासनृत्तगीतवाद्यादि सर्वोऽप्यानन्दविषयो-पपन्नो व्यवहारो विनाशमुपगतः। कामानन्दजनितत्वादेतत्समस्तजगदानन्दस्य कामं विना सर्वस्य नाशो जातः। केवलं तस्मिन् काले ब्रह्मादिपिपीलिकान्तानां सर्वेषामपि शरीरिणां रसक्षयात् रसजनितगुणकलापक्षयाच्च रसमूलस्य रक्तस्य नीरसीभावेन मांसमेदःशोषे जाते शुष्कचर्मशिराअस्थिमात्रावशेषाः पिशाचाकारा अन्योन्यसंसर्गविरहिताः, तदभावेन ब्राह्मण-क्षत्रियवैश्यशूद्राणां तपस्या-राज्यरक्षा-वाणिज्य-सेवाविरहेण शून्यभूतजगन्मङ्गलचेष्टाः सर्वेऽपि जन्तवो जाताः। तदनन्तरं देवैर्मिलित्वा सर्वैः परमशिवो महाशम्भुनाथनामा स्तुतिभिः प्रार्थितस्तेन च महायागप्रकार उक्तः। तेन यागेन शोषिताः समुद्राः कुण्डानि सर्वाणि वृक्षजालानि समिधः शुद्धजलवर्षणादावर्जिताः पञ्च समुद्राः घृतोदकाय आज्यधारा हेमपात्राणि पुष्करावर्तनामानो बहुलक्षणयोजनायामाः कल्पान्तमेघाः स्रुक्स्रुवादिहोम-पात्राणि, एवं जाज्वल्यमाने महाशम्भुनाथमुखहुङ्कारेणोद्गते महाज्ञानवह्नौ वन्धासुररोम-कूपोत्थितरसशोषणनामा महासुरग्रस्तसाराणि पुरातनानि शरीराणि दुःखमयानि दुर्वहानि

पापरूपाणीव, तानि महाशम्भुनाथप्रेरितचित्तवृत्तयः सर्वेऽपि जुहवाम्बभूवुः । तदनन्तरं यागसमाप्तौ शम्भुना यजमानेन संविद् वह्नेः समुद्भूते सति सकललोकनायिका भगवती श्रीश्रीललितामहाभट्टारिका चतुर्वेदतुरङ्गमं मुक्त्वा च्छत्रोपशोभितं नवपर्वसमेतमनेकलक्षण-योजनायतं महाचक्रराजविमानमारुह्य भगवतः पावकात् कृताविर्भावात् त्रिभिर्लोचनैस्त्रीन ब्रह्मविष्णुरुद्रान् सृष्टवती तेषां च कर्माणि सृष्टि-स्थिति-संहाराख्यानि कर्माणि समादिशत् । कटाक्षेण कामदेवं सृष्टवती । क्षणादेव भगवत्या रोमकूपेभ्यः सर्वब्राह्मणाः प्रजापतयो देवाः, शक्रादिदिक्पालाः, अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, अप्सरसो, गन्धर्वाद्याश्च देवयोनयो, जङ्गमाजङ्गमवर्णाः सत्त्वरजस्तमांसि च सर्वाण्येव जगद्वस्तूनि सम्भूतानि । पूर्वजन्माधिकसौभाग्ययुक्तास्तदधिकगुणिनस्तदधिकशीलाः सर्वेऽपि देवा भगवती नमस्कृत्य सर्वलोकाचारमूलभूतं सर्वधर्माधर्मपरिज्ञानफलं शास्त्रं सृष्टवती । दक्षिणनयनेन ऋचं सृष्ट्वा ततो ब्रह्मसिद्धान्तं सृष्टवती । वामनयनेन यजुः सृष्ट्वा ततो वैष्णवशास्त्रं सृष्टवती । ललाट-नयनेन सामानि सृष्ट्वा ततश्शैशवं शास्त्रं सृष्टवती । रसभावसमन्वितात्परमानन्दरूपात् निज-कटाक्षादथर्ववेदं सृष्ट्वा ततस्त्रिपुरसिद्धान्तं स्वकीयभोगप्रधानं सर्वदेशव्यापकं सर्वकालस्थापकं तुलनामधेयं सृष्टवती । महादर्शनं स एव खलु समयो नाम । समयवद् व्यापकश्रीभगवत्याः पूजागमः स समयो नाम, सोऽस्यास्तीति ते समयिनः, "अत इनिठनौ" इति इनिप्रत्ययः । परमेश्वरीचरणपरायणमहापुरुषाः । हे जननि ! एषां समयिनां सर्वार्थसाधकौ तव चरणौ न्यूनगुणं सरोजं जयत इति किं चित्रं, नास्त्येव यत उत्कृष्टेनापकृष्टं विनष्टतां नीयते ॥ ८४ ॥

नमोवाक्यं ब्रूमो नयनरमणीयाय पदयो-
स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते,
पशूनामीशानः प्रमदवनकं केलितरवे ॥ ८५ ॥

हे परमेश्वरि ! नयनरमणीयाय लोचनानन्दजनकाय स्फुटरुचिरसालक्तकवते स्फुटया रुच्या निजचरणकान्त्या रसातिशयो यस्य तद्व्यापकमलक्तकमलक्तकस्य यो रसः भग-वत्याश्चरणरुचिरेव तव चरणरुच्यैव यावत्कस्य रसो द्योत्यते, तद्युक्ताय निजकान्तिसम-धिकसौन्दर्यलक्ष्म्या रञ्जिताय तव चरणयोर्द्वन्द्वाय पदारविन्दयुगलाय नमोवाकं ब्रूमः नमस्कारवाक्यं ब्रूमः सम्पादयामः । एतदेव चरणद्वयं विशिनष्टि यदभिहननाय ययो-श्चरणयोरभिहननाय दोहदसम्पादकलीलावघाताय सम्प्रदानाय स्पृहयते स्पृहां कुरुते । प्रमदवनकं केलितरवे लीलोद्यानमध्यवर्तिने अशोकवृक्षाय "कङ्केलिः कामकेलिः स्यादशोको-रक्तपुष्पकः" इति विश्वः । अत्यन्तमसूयति मात्सर्यं करोति कः पशूनामीशानः । अशोकवृक्षः खलु उत्तमाङ्गनानां चरणाघातेन बहुतरकुसुमसमृद्धिमान् भवतीति कविसमयः । तथा चोक्तं मयैवालङ्कारचूडामणौ "पादाहत्या त्वशोको वदनमदिरया केसरः पाणिस्पर्शाच्चूतो वीक्षाहसाभ्यां तिलकतरुनमेरुप्रियालश्च गत्या सँल्लापात् कर्णिकारः कुरवकतरुरालिङ्ग-नात्सिन्दुवारः, श्वासाः स्त्रीणां विकासं विदधति मदरागेन चम्पश्च शाखी" अत्र भगवत्या

इतरोत्तमाङ्गनाभ्योऽपि असाधारणं चरणसौन्दर्यं वर्ण्यते यत्पशूनामीशानस्यापि उद्गत-समस्तदुर्गुणस्यापि मात्सर्यदोषसम्भवः, एतच्चरणसौभाग्यातिशयो मयैव ज्ञातव्यस्त्वया अचेत-नेन निरर्थकं ज्ञायत इति परमेश्वरस्याशोकं प्रति मात्सर्यं तेनैव तत्सौभाग्यध्वनिः ॥ ८५ ॥

**मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं,**
**ललाटे भर्तारं चरणकमले ताडयति ते ।**
**चिरादन्तःशल्यं दहनकृतमुन्मीलितवता,**
**तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ॥ ८६ ॥**

हे परमेश्वरि ! तव चरणसौभाग्यं पुनः किं वर्णयामः, तथापि श्रूयताम् पुरा कदाचित् सम्भोगसमये महादेवस्त्वच्चरणताडनजनितशृङ्गारमनुबुभूषुस्तल्लाभः कोपेन विना नास्तीति मृषैव गोत्रस्खलनं कृतवान्, तत्कृत्वा अथ अनन्तरं वैलक्ष्यनमितं लज्जया विनतम् इदानीमेव मम चरणताडनसौभाग्यं भविष्यति इत्याशङ्क्यैव विनतं प्रह्वीभूतं महादेवं भर्तारं कर्म ते तव चरणं कर्म पादसरोरुहे ताडयति सति ललाटे प्रहरति, कामदेवेन विजृम्भणानन्देन तेनैव हेतुना पूर्वं महातपस्वी मां जितवान्, स तु इदानीं मम मातुश्चरणताडनस्य पात्रं जातः, अधुना मयैव शृङ्गारबाणेन विजितः स्त्रीचरणघातपात्रं जातः, इति वचनानि कृत्वा ईशान-रिपुणा कामदेवेन किलिकिलितम् किलिकिलारावः कृतः । केन कारणेन ? तुलाकोटिक्वाणैः नूपुरशब्दैः करणभूतैः शब्दाडम्बरं विना किलकिलारावो न सिध्यति, किलकिलारावो नाम सिंहनादः—"जितशात्रवदर्पस्य प्रतिज्ञापूरणीकृतः । वीरस्य गर्जितं सिंहनादः किलकिला तथा ।" इति विश्वः । कामस्य गर्जितमुभयथा भवति शत्रुदर्पक्षयेण प्रतिज्ञापूरणेन च कामस्य तु तदुभयमपि भगवत्याः प्रसादात्सम्पन्नम्, यो मां जितवान् स मया जितः, स्त्रीपरायणो जात इति शत्रुतिरस्कारेणैव च किलकिलारावः मम प्रतिज्ञापूरणे च सर्वमोहनेन सर्व-मोहनप्रसिद्धिः, शिवेन कुण्ठितः पश्चात्तस्यापि मोहनेन सर्वमोहनप्रसिद्धिः मया प्राप्ता, वीर-स्यातिशयः खलु स्वप्रतिज्ञापूरणम् आनन्दलाभे सति पूर्वानुभूतस्य दुःखस्य विस्मरणमेव न भवति, यतः कामेम दहनं कृतम् महादेवलोचनकृतेन दहनेन कृतं सम्पादितमन्तःशल्य-मभ्यन्तरे पराभवकीलितमुन्मीलितम्, अत एव एतदुन्मीलितवता कामदेवेन आनन्द-लाभात् विस्मृतदुःखेन किलकिलारावः कृतः ॥ ८६ ॥

**पदं ते कान्तीनां प्रपदमपदं देवि विपदां,**
**कथं नीतं सद्भिः कठिनकमठीखर्परतुलां ।**
**कथं यत्पाणिभ्यामुभयमनकाले पुरभिदा,**
**तदा दायन्यस्तद्दृषदि दयमानेन मनसा ॥ ८७ ॥**

हे परमेश्वरि ! सहजललितं सौभाग्यसुन्दरं तव चरणपदं स्थानं कान्तीनामनुपमितमिति तस्य चरणारविन्दस्य प्रपदकठिनेन कर्कशेन कमठीखर्परेण तुलयन्ति, तदेव तेषामनुचित-करणम् अत एव कमठीखर्परातुलां कमठ्याः कच्छपवध्वाः खर्परेण पृष्ठभागेन तुलामुपमानं सद्भिः कथं नीतम् ? सन्तः एवं (न) भवन्तीत्यस्याक्षेपः । हे देवि ! तव खलु प्रपदस्या-

तुलस्यापि तुलासम्पादनं विपदेव। विपदामपदे तव प्रपदे विपदुत्पत्तिरनुचितेति भावः। अत एवोक्तं विपदामपदमित्येवं प्रपदस्य सौभाग्यं वर्णयित्वा तदेव विशिनष्टि पूर्वं—विवाहकर्मोचितप्रस्तरे उपयमनकाले पुरभिदा महादेवेन दृषदि विवाहकर्मोचिते प्रस्तरे "आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव" इति मन्त्रेण वरेण कन्यायाश्चरणमस्मिन् निधीयते वैदिककर्मस्वातन्त्र्यात्, अत एव दयमानेन दयां कुर्वता मनसा सह पुरभिदा महादेवेन पाणिभ्यामुभाभ्यामपि गृहीत्वा दृषदि तच्चरणं कथं शुचीति वचनात् अधरचुम्बनमात्रमेवाचारो भवतु, इतरचुम्बनेषु प्रामाण्याभाव इति चेत् न "स्त्रियो मेध्यास्तु सर्वतः" इति मेध्यतावचनबलेन सर्वाङ्गे पवित्राणां स्त्रीणां नयनदोर्मूलकुचाग्रनाभिमूलचरणाग्रचुम्बनानि कामशास्त्रप्रसिद्धानि। महाकविभिरपि काव्येषु प्रयुक्तानि प्रामाणिकान्येतानि स्त्रीणां सर्वाङ्गपवित्रतां विना न सम्भवन्ति। इत्थं पवित्राणां स्त्रीणां विवाहसमये चरणग्रहणं न दोषः। स्त्रियो महतीभिर्देवताभिः कृतानुग्रहा नित्यपवित्रा एव जायन्ते। तां खलु कन्यां विवाहादिचतुर्दिवसेषु प्रथमरात्रौ सोमनाथो भुङ्क्ते भुक्त्वा गच्छन् वरं ददाति, किं? शुचितां नित्यशुद्धताम्। स्नानेऽपि अस्नानेऽपि स्त्रियः सर्वदा पवित्रा एव "सोमः शौचं ददौ तासाम्" इति वचनात्। द्वितीयरात्रौ तां कन्यां गन्धर्वराजो भुङ्क्ते। "सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः" इति वचनात्। स तु विश्वावसुर्गन्धर्वराजस्तां कन्यां भुक्त्वा गच्छन् वरं ददाति स्त्रियः खलु सोमवल्योऽपि खलु शुद्धकण्ठस्वना भवन्ति किमुत आलपन्त्यः किमुत गायन्त्यः। तृतीयरात्रौ भगवान यज्ञपुरुषो वह्निस्तां कन्यां भुक्त्वा गच्छन् वरं ददाति 'सर्वभक्ष्या भव' इति। अतः स्त्रीणां सर्वभक्षणे दोषो नास्ति। भक्ष्याभक्ष्यविचारशून्यास्तथापि पवित्र एव, वरप्रदानार्थं भोगोऽपि वेदेन "तृतीयोऽग्निष्टे पतिः" इति एवमेव महतीनां देवतानामनुग्रहे सति गृहिणीजनस्य गृहिननेन क्रियमाणे तच्चरणवन्दनेन दोषशङ्काकलङ्कोऽपि दूरापास्तः ॥८७॥

**नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिः,**
**तरूणां दिव्यानां हसत इव ते चण्डिचरणौ।**
**फलानि स्वस्थेभ्यः किसलयकराग्रेण ददतां,**
**दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८८ ॥**

हे चण्डि! महायोगिनां योगसिद्धये तत्तद्धृदयसञ्जातयोगनियमभूतकामक्रोधलोभमोहमदमात्सर्यख्यारिषड्वर्गरूपमधुकैटभमहिषासुररक्तबीजशुम्भ-निशुम्भषड्दैत्यमल्लदर्पविमोचनाय चण्डनतया क्रोधनतया गृहीतदुर्गावेषा चण्डि त्वमेव निर्विण्णमोक्षदायिनीति, तन्नाम्ना सम्बुद्धिबोधिते न त्वप्रयासे स्वस्थेभ्यः सर्ववासिभ्यः पूर्णधनेभ्यः किसलयकराग्रेण पल्लवहस्तेन फलानि ददतां कल्याणकल्पतरूणां तव चरणौ हसत इव अनेन प्रकारेण गुणाधिक्यात किं तद्गुणाधिक्यं नाम ते खलु कल्पतरवः स्वस्थेभ्यः सम्पूर्णधनेभ्यः धनं प्रयच्छन्ति तव चरणौ तु दरिद्रेभ्य अकिञ्चनेभ्यः भद्रां सम्पूर्णां श्रियं धनसम्पदमनिशं सर्वदैवाह्नाय वेगेन "द्राग् झटित्यञ्जसाह्नाय सद्यः स्त्राङ् मङ्क्षु च द्रुतम्" इति विश्वः। ददतौ सर्वदा

दातुमुद्युक्तौ शत्रन्तं तस्य वर्तमानकालसम्बन्धात् तव चरणयोः दानकर्मविरहो नास्ति एवंभूतौ तव चरणौ नाकस्त्रीणां देवाङ्गनानां करकमलसङ्कोचशशिभिः करकमलसङ्कोचकर्मणि चन्द्रायमाणैः देवस्त्रियः खलु साञ्जलिं कृत्वा नमस्कारवेलायां करकमलस्य सङ्कोचो भवति, ईदृशैर्नखैः दन्तप्रकाशैरिव दिव्यानां देवतरूणां हसत इव देवतरूपहसत एवेत्यर्थः। 'विवक्षातः कारकाणि भवन्ति' इति वररुचिसूत्रन्यायात् कर्मणि षष्ठीति विवक्षा ॥ ८८ ॥

**कदा काले मातः कथय कलितालक्तकरसं,**
**पिबेयं विद्यार्थी तव चरणनिर्णेजनजलं ।**
**प्रकृत्या मूकानामपि च कविताकारणतया,**
**यदाधत्ते वाणीमुखकमलताम्बूलरसतां ॥ ८९ ॥**

हे मातः त्रिभुवनजननि ! कथय सफलः कदा भविष्यति, यदा यस्मिन् काले कलितालक्तकरसं कलितं प्रक्षालनवेलायां सङ्क्रान्तम् अलक्तकरससौभाग्यं यस्य तत्तथोक्तं, तव चरणनिर्णेजनजलम् "णिजिर् शुद्धौ" इति धातोः निःपूर्वस्य ल्युट् "युवोरनाकौ" इत्यनादेशेन निर्णेजनजलं कदा विद्यार्थी सन् पिबेयम् ? । तदेव जलं विशिनष्टि—प्रकृत्या मूकानां प्रकृत्या स्वभावत एव मूकानां वक्तुमशक्यानां कविताकारणतया सारस्वतहेतुभूतया यत्प्रक्षालनजलं वाणी मुखताम्बूलरसताम् वाण्याः सरस्वत्या मुखकमलशोणवर्णनागवल्लीदलरससादृश्यं गृहीत एवं खलु श्रूयते । कालिदासादयः कवीश्वराः तपसा सरस्वत्या सन्तोषिताया भगवत्याः सरस्वत्या मुखताम्बूलं भुक्त्वा महाकवयो जाता इति तदर्थसूचनमनेन श्लोकेन कृतम् ॥ ८९ ॥

**पदन्यासक्रीडापरिचयमिवालब्धुमनसः,**
**चरन्तस्ते खेलशरणकलहंसा न जहति ।**
**स्वविक्षेपे शिक्षासुभगमणिमञ्जीररणित-,**
**च्छलादाचक्षाणं चरणकमलं चारु चरितं ॥ ९० ॥**

हे परमेश्वरि ! त्वत्पदन्यासक्रीडापरिचयं चरणविन्यासलीलाभ्यासमालब्धुमनस इव, आसमन्ताल्लब्धुं मनो येषां ते तथोक्ताः, आङ्पूर्वो लभिर्यद्यपि हिंसायां वर्तते तथाप्यत्र प्राप्त्यर्थो वेदितव्यः। अनेकार्थत्वाद्धातूनाम्, आलब्धुमिति तुमन्ते मकारलोपः "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि" इति वचनात् मकार लोपः। खेलं लीलारसं यथा भवति तथा चरन्तः सञ्चारं कुर्वाणाः, शरणकलहंसाः शरणे गृहे वर्तमानाः कलहंसाः "शरणं गृहरक्षित्रोः" इत्यमरः । कलहंसा राजहंसाः, "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः । तव चरणं न जहति न परित्यजति । "ओहाक् त्यागे" इति धातोः लटि बहुवचने रूपम्—जहाति, जहीतः, जहति । किमर्थं न जहति ? शिष्या यथा गुरुं विद्याभ्यासिनः सेवन्ते तथा गतिलीलार्थं तव चरणं सेवन्ते हंसाः, सुभगमणिमञ्जीररणितच्छलात् सुभगस्य मनोहरस्य मणिमञ्जीरस्य रत्ननूपुरस्य रणितच्छलात् सशब्दव्याजात्, स्वविक्षेपे स्वस्य चरणस्य विक्षेपे विन्यासे शिक्षामभ्यासवचनमाचक्षाणं ब्रुवाणमन्योपाध्यायः

शिष्याणां स्वयं प्रथमत आचष्टे तच्छ्रुत्वा शिष्याः पठन्ति। पुनः किंभूतं चरणं? चारुचरितम् मनोहरसौभाग्यम् "चरितं तु चरित्रं स्यात् सञ्चारे व्रतकर्मणि।" इति विश्वः। एवंभूतं विश्वचरणं गुरुस्थानीयं शिष्यीभूताः कलहंसा न जहति इत्यन्वयः। अत्रैव श्लोके महाकविना कर्त्रा शङ्करेणैव आगमशास्त्रप्रसिद्धस्य शरणस्य देवीभवनस्य श्रीचक्रराजधान्याः स्थाने वर्तमानाः कलहंसाः चक्राधिदेवाश्चक्राधिदेव्यश्च प्रोच्यन्ते—कलहंसत्वं तेषामुच्यते-कलः अव्यक्तमधुरः कण्ठे वर्तमानहंस इति मन्त्रो येषां ते कलहंसाः पूर्वोक्ताश्चक्राधिदेवतास्ते च पञ्चाशद्भेदभिन्ना भवन्ति। तत्र प्रथमं गुरुश्चक्रेश्वरः अनन्तरं गणपतिः सर्वद्वारनिविष्टः अष्टोत्तरशतधा भिन्नः, उक्तं चक्रावलिस्तोत्रे 'कलश्रीपुरगोपुरचिन्तामणिगृहमुखद्विपार्श्वेषु। अष्टोत्तरशतधास्थितप्रथमप्रणामे महागणेशान'मिति नानावृक्षमहोद्याने कालनाथः ततः पूर्वं कालायस-कल-चतुर्द्वारपालको दीपनाथकल्पतरुवाटिकायां वसन्तः, सन्तानवाटिकायां ग्रीष्मनाथः, हरिचन्दनवाटिकायां वर्षानाथः, मन्दारवाटिकायां शरदृतुनाथः, पारिजातवाटिकायां हिमर्तुनाथः, कदम्बवाटिकायां शिशिरर्तुनाथः, तत्रैव श्यामाम्बापुष्परागवाटिकायां मृत्युञ्जयनाथः, पद्मरागवाटिकायामम्बिकादेवी, गोमेदवाटिकायां श्रीकला सङ्कर्षिणी, हीरकतरुवाटिकायां विश्वावसुगन्धर्वपतिः, वैडूर्यमणिवाटिकायामनन्तनाथः, हरिन्मणिवाटिकायां वेदमाता गायत्री, मुक्तामणिवाटिकायां पूर्वभागेन्द्रदेवेन्द्रनाथः, तस्याः प्रदक्षिणे भगवान् वैश्वानरः, तस्य याम्याशायां यमनाथः, तस्य दक्षिणपश्चिमे निर्ऋतिनाथः, तस्य पश्चिमदिग्भागे वरुणः, तस्या वायव्ये मारुतनाथः, तस्या उत्तरे कुबेरनाथः, तस्य प्रागुत्तरे विधिवद्रुद्रः देवतालवाटिकायां वार्ताली, विद्रुमलतावाटिकायां ब्रह्मनाथः, माणिक्यमण्डपे श्रीविष्णुः, सहस्रस्तम्भमण्डपे शम्भुनाथः, अमृतवाटिकायां तारादेवी, आनन्दवाटिकायां वारुणी देवी, विमर्शनवाटिकायां कुरुकुल्लादेवी, बालातपच्छायायां मार्तण्डभैरवः, चन्द्रिकोद्गारकच्छायायां सोमनाथः, शृङ्गारपरिखायां मन्मथनाथः, महापद्माटव्यामन्नपूर्णा, चिन्तामणिगृहराजप्राग्द्वारे दुर्गाभट्टारिका तस्य दक्षिणद्वारे सरस्वतीभट्टारिका, तस्य पश्चिमद्वारान्ते महात्रैपुरसिद्धान्तसमयनाथः तस्योत्तरद्वारे सम्पत्करी भट्टारिका, चिन्तामणिगृहाभ्यन्तरे कुमारकामेश्वरः, पञ्चब्रह्ममहामञ्चाधस्तात् श्रीबालाम्बिका, चिन्तामणिगृहराजपरितो महाशम्भुनाथः, चिन्तामणिगृहराजतूलिकापीठे श्रीपूर्वा-चिन्तामणिगृहराजपूर्वद्वारोत्तरमणिधिष्ठिता मन्त्रवक्त्रमातङ्गी, तस्या एव दक्षिणभागमणिधिष्ण्ये (ष्ठ्ये) मन्त्रवाराही, चक्रराजमहारथशृङ्गे सप्ताननभट्टारिका, श्रीचक्रस्थाने श्रीश्रीकामेश्वरभट्टारकः, इत्थं पञ्चाशच्चक्रभागनायिकाः कलहंसशब्दवाच्यास्ते सर्वे श्रीनगरे किं कर्तुं तिष्ठन्तीत्याह—**पदन्यासक्रीडा रक्षाविधानं**, इव। पदानि स्थानानि चतुर्दश भुवनानि तेषां न्यासः सृष्टिः, क्रीडारक्षाविधानं, परिचयः संहारः, "चिञ् चयन" इति धातुः संहारेऽपि वर्तते, न्यासः क्रीडापरिचयश्च न्यासः क्रीडापरिचयम्। सर्वो द्वन्द्वो विभाषयैकवद् भवति, एतदालब्धुमनसः प्राप्तुमनसः। एतदुक्तं भवति—स्वेच्छयैव पदानां भुवनानां सृष्टि-स्थिति-संहारसामर्थ्यं सम्पादयितुं प्रवृत्ता इति। अत एव खेलं चरन्तः खे चिदाकाशे त्वच्चरणध्यानसमे अल-

मत्यर्थं चरन्तः कृतसञ्चाराः तव चरणं न जहति । कीदृशं तव चरणम्? स्वविक्षेपे स्वस्यात्मनः विक्षेपे विविधतया भिन्नीकृत्य निरसने अविद्यायाः खलु शक्तिद्वयम्–आवरणशक्तिर्विक्षेपशक्तिश्च । सा खलु एकरूपं ब्रह्मावृत्य नानात्वेऽपि विक्षिपतीति वेदान्तसिद्धान्तिनः, अतः स्वस्य विक्षेपे भेदज्ञाने संसारमूले जाते तस्य निरसनशिक्षायामाचक्षाणमिव । अथवा विश्वविक्षेपे–शोभनश्चासौ अविक्षेपश्च स्वविक्षेप अविक्षेपोऽविकल्पः ब्रह्मज्ञानं तस्मिन् स्वविक्षेपे–विषये इति विषयसप्तमी तदर्थमित्यर्थः । सुभगमणिमञ्जीररणितच्छलात्–सुभगानां मणिः सुभगमणिः सुभगः श्रेष्ठः श्रीकामेश्वरभट्टारकः मञ्जीनां दीरो मन्दीरः मनो मनसो जायते इति मञ्जः कामः स एषामस्तीति मञ्जिनः संसारिणस्तान् दीरयति प्रेरयति दूरीकरोति मञ्जीरः शुद्धज्ञाननिधिः परमहंसो निष्कलः सुभगमणिश्च मञ्जीरश्च उभौ सुभगमणिमञ्जीरौ सकलनिष्कलब्रह्मणीत्यर्थः, तद्विषयं व्याख्यानं रणितं तच्छलात् तद्व्याजात सकलनिष्कलातिगं तुर्यातीतं तव चरणकमलम्, अत्र चरणशब्देन महाप्रकाशविमर्शद्वयमुच्यते–परब्रह्मैव शिक्षारूपमाचक्षाणं तव चरणकमलं चारुचरितं मनोहरवृत्तान्तं, तदेव चरणं भक्षकं "चर गतिभक्षणयो"रिति धातुः कमलत्वञ्च विकाससङ्कोचधर्मित्वात्, तस्य जगद्रूपेण सङ्कोचः स्वस्वरूपेण विकासश्च कमलस्यापि विकाससङ्कोचौ स्वभावसिद्धौ इत्थं तव महाप्रकाशविमर्शरूपं चरणात्मना परिणतं न जहति । एतत्खलु परब्रह्मप्रतिपादकमागमनामधेयमथर्ववेदसारं महादर्शनं प्रवर्तयितुमेव भगवती स्वसीमन्तस्थसिन्दूरपरागादेकदेवता परमेश्वर-परमेश्वरी "अम्बासमर्जादिगुरूत्तमाम्" इति वचनप्रामाण्यात् परमेश्वर-परमेश्वरी नाम आदिशक्त्या सृष्ट्यां स्वसंमयसम्प्रदायसिद्ध्यर्थं काचन देवता सृष्टा, तस्याः शिष्यो मित्रेशः, तच्छिष्यः षष्ठीशः, तच्छिष्य उड्डीशः, तच्छिष्यश्चर्यानाथः, तस्य लोपामुद्रा, तस्या अगस्त्यः, एताः सप्तगुरुपादुका भगवतीविद्यायां देवलोके दीक्षाकारिण्यः अगस्त्यस्य शिष्यः कालतापनः, तस्य शिष्यो धर्माचार्यः, तस्य शिष्यो मुक्तकेशीश्वरः, तस्य शिष्यो दीपकलानाथः, एते चत्वारो गुरवः देवयोनीनां विद्याधरादीनां परमेश्वरी-श्रीविद्यादीक्षाप्रदातारः । तच्छिष्यो विष्णुदेवः, तच्छिष्यः प्रभाकरदेवः, तच्छिष्यस्तेजोदेवः, तस्य मनोजदेवः, तस्य कल्याणदेवः, तस्य रत्नदेवः, तस्य वासुदेवः, तस्य शिष्यः श्रीरामानन्दः, इत्यष्टौ गुरवो मनुष्याणां श्रीविद्यादीक्षकाः एतेषामेकोनविंशतिभेदानां शिष्यप्रशिष्य-सन्तान-परम्परावहुलीभूतं त्रैपुरसिद्धान्तरत्नं प्रवर्तते । तदेते गुरवः कलहंसशब्देनोच्यन्ते । एते चान्ये च श्रीचक्रनगरवासिनस्त्वच्चरणपरिचर्यां कदाचिदपि न परित्यजन्ति इत्यलमतिविस्तरेण ॥ ९० ॥

ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशी,
ममन्दं सौन्दर्यं प्रकरमकरन्दं विकिरति ।
तवास्मिन् मन्दारस्तबकसुभगे यातु चरणे,
निमज्जन्मज्जीवः करणचरणौ षट्चरणतां ॥ ९१ ॥

हे परमेश्वरि ! दीनेभ्यो दरिद्रेभ्यः पूर्णाहन्ताविरहितेभ्यश्च उभये खलु दरिद्रा अन्तर्दरिद्रा बाह्यदरिद्राश्च, अन्तर्दरिद्राश्च स्वयं परिपूर्णस्वभावा अपि परमात्मनः स्वयैव मायाख्यया शक्त्या परमोहितत्वाज्जनिताभिः कलाविद्यारागकालनियतीभिः अविशिष्टतया विश्वशरीतापं परित्यज्य सर्वकर्तृत्वं सर्वकामसमृद्धत्वनित्यत्वस्वतन्त्रत्वानि स्वतःसिद्धानि परित्यज्य तद्विरुद्धधर्मान् किञ्चित् कर्तृत्वकामुकत्वमरणधर्मत्वविधिनिषेधविषयत्वाख्यान् गृहीत्वा, शिवपरित्यागपूर्वत्वं पशुत्वं गृहीत्वा, संसारिणो वर्तमाना ये भवन्ति ते बहिर्दरिद्राणाम्। बाह्यभोगार्थं धनधान्यस्रक्चन्दनसौधभवनक्षेत्रपुत्रकलत्रगजतुरङ्गगणपदातिविरहितास्तेभ्य उभयेभ्यो दरिद्रेभ्य आशानुसदृशीम् अभ्यन्तरे वर्तमानाया आशाया अनुसदृशीं तुल्याकारां श्रियं परिपूर्णाहन्तामभ्यन्तरीयधनादिरूपां बाह्यां च लक्ष्मीमुभयीं ददाने नित्यं प्रयच्छति कल्पवृक्षस्तवकसाधर्म्यं चरणे खलु वर्तते, यतः कल्पवृक्षोऽपि याचकेभ्यः श्रियं ददाति, अमन्दं भूयिष्ठसौन्दर्यं प्रकरमकरन्दं लावण्यसमूहमधुरसङ्कर्षणयुक्तम्, अत एव मन्दारस्तवकसुभगे मन्दारस्य सुरतरुविशेषस्य स्तवकवत् पुष्पगुच्छवत् सुभगे कमनीये तवास्मिन् चरणे मज्जीवो मम जीवात्मा निमज्जन् निर्व्याजमेव निलीय तथाऽऽस्वादरसमनुभवन् किञ्च करणचरणाः करणचरणानि मनःषष्ठानि पञ्चज्ञानेन्द्रियाणि श्रोत्र-त्वक्-चक्षु-घ्राण-रसनाख्यानि एव षट् चरणाः षट्पदानि यस्य स तथोक्तः, भृंगोऽपि षट्चरणो भवति । एवं त्वदीयचरणाख्ये सुरतरुस्तवके अम्लाने अपर्युषिते अपर्यन्तपरमानन्दारके मधुरसार्षिते मम जीवात्मा भृङ्गः सततं सङ्गी भवत्वित्यर्थः ॥ ९१ ॥

अराला केशेषु प्रकृतिसरला मन्दहसिते,
शिरीषाभा गात्रे दृषदिव कठोरा कुचतटे ।
भृशं तन्वी मध्ये पृथुरपि वरारोहविषये,
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ९२ ॥

हे भगवति परमेश्वरि ! शम्भोर्मूर्तिरिव करुणा, किंरूपा ? केशेषु अराला वक्रा "अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम्" इत्यमरः । मन्दहसिते अल्पहासे प्रकृतिसरला स्वभावत ऋजुः पतिव्रतानां प्रथमत्वादन्यस्त्रीणामिव चपलचित्तानां मन्दहसिते अनार्जवमसारल्यं नास्ति, अत एव प्रकृतिसरला, गात्रे शरीरेऽतिकोमलसम्पदा शिरीषाभा शिरीषकुसुमवन्मृद्वी, कुचतटे स्तनभारे दृषदिव शिलेव कठोरा काठिन्यगुणयुक्ता, मध्येऽवलग्ने भृशमत्यन्तं तन्वी तनिष्ठा, वरारोहविषये वरस्य श्रेष्ठस्य आरोहस्य नितम्बस्य विषये स्थाने "आरोहो जघनं श्रोणी नितम्बः स्त्रीकटितटः" इति विश्वः । पृथु प्रथिमगुणयुक्ता एवमाकारसम्पन्ना जगद् भुवनं त्रातुं शम्भोर्भगवतो मूर्तेव करुणा काचिदरुणा जयति सर्वोत्कर्षेण वर्तते इत्यर्थः ॥ ९२ ॥

पुरारातेरन्तःपुरमसि यतस्त्वच्चरणयोः,
सपर्यामर्यादा तरलकरणानामसुभगा ।
यथा ह्येते नीताः शतमुखमुखाः सिद्धिमतुलां,
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥ ९३ ॥

ननु भगवती खलु श्रीललिताभट्टारिका महादेवमहाराजस्य श्रीकामेश्वरापरपर्यायस्य पट्टमहिषीति प्रसिद्धिः, सा खलु सर्वदा अन्तःपुरे गुप्ता भवति, असूर्यम्पश्याः खलु राजदाराः सकलमातरं त्वामनाराध्य न कस्यापि जन्तोः कामितफलप्राप्तिः तस्याश्चान्तः-पुरगतत्वात्कथं पूजा निर्वहति इत्याशङ्कायामाह—हे परमेश्वरि ! पुरारातेर्महादेवस्य त्वमन्तः-पुरमसि प्रधानमहिष्यसि यतः यस्मात् कारणात् अमर्यादा सम्पूर्णा तरलकरणानामुच्चलित-चित्तवृत्तीनामसुलभा लब्धुमशक्या अस्मिन्नर्थे युक्तीं दर्शयति, तथाहीति—यतो हेतोर्महादेवि-त्वदभ्यन्तर एव स्थिता, तत्तस्मात् कारणात् तव द्वारोपान्तस्थितिभिः चिन्तामणिगृहराजस्या-न्तिमकक्षानिविष्टाभिः विन्दुचक्रा अस्त्रं वहिस्ततोऽष्टारं वहिस्ततो वहिरन्तर्दशारं ततो वहिर्दशारं ततो वहिर्मन्वस्रं ततो वहिर्नागदलं ततो वहिःषोडशदलं ततो वहिश्चतुरस्रदेशमुद्रा ततो मध्यम-चतुरस्रब्राह्म्याद्याः सर्ववहिश्चतुरस्रएवाणिमाद्याः स्थिताः, ताः खलु प्रकटाः वाह्या भगवत्या-श्चेटिकाशयाः लोभिजनवञ्चकत्वान्नानामायाविलासमूलत्वादनेकयोगिजनमुक्तत्वात् सर्वसाधा-रणत्वात् गणिकाप्रायाः इन्द्रादिवाह्यजनानामुपसर्पणनिवेदनादियोग्यास्ताः खलु भवन्ति । अत एव द्वारोपान्ते सर्ववाह्यचतुरस्रे स्थितिः स्थानं यासां ताः तथोक्ताः, द्वारोपान्तस्थिति-भिरणिमाद्याभिः पूर्वोक्ताभिः शक्तिभिः शतमखमुखा पुरन्दरप्रमुखा गीर्वाणा अतुलामनुपमेयां सिद्धिं भोगैश्वर्यसम्पदं नीताः प्रापिताः ॥ ९३ ॥

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः,
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनलम्भारुणतया,
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकं ॥ ९४ ॥

हे परमेश्वरि ! द्रुहिणहरिरुद्रेश्वरभृतः द्रुहिणो ब्रह्मा, हरिर्विष्णुः, रुद्रः संहर्ता ईश्वरस्तिरो-धानकृत्, एतैश्चतुर्भिर्मञ्चपादत्वं गतैः ब्रह्ममयैकमञ्चपादाय नम इत्यादि चतुश्चत्वारिंशन्मन्दिर-मन्त्रान्तर्गतमन्त्रपञ्चकप्रामाण्यात् उपरिफलकरूपस्य सदाशिवस्य एते भर्तारो मारका भवन्ति, इति कृत्वा तैर्भृतो धारितः शिवः सदाशिवः, किंभूतः? स्वच्छच्छायाघटितकपट प्रच्छदपटः— स्वच्छया स्वच्छायया सदाशिवस्य छायया घटितः कपटरूपः मायारूपः प्रच्छदपट उत्तरीया-स्तरणवस्त्रविशेषो यस्य तथोक्तः सदाशिवस्य विशेषणम्, पुनः किम्भूतः शिवः त्वदीयानां त्वदङ्गसमुद्भूतानां भासां लौहित्यसन्धानं प्रतिफलनलाभारुणतया सङ्क्रान्तिलाभेनात्यन्त-पाटलवर्णतया शरीरी शृङ्गारो रस इव मूर्तिमान् उज्ज्वल इव "शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः। दृशां कुतुकं दोग्धि। कस्य दृशां? भगवत एव लोचनानाम्, अन्येषां तत्र प्रवेशा-

भावात् भगवत्यास्तु पञ्चशिवमञ्चारोहणं वहुषु स्थलेषु श्रूयते—"ब्रह्मविष्णुशिरोरत्ननिर्घृष्ट-चरणाम्बुजे" इति, "पञ्चब्रह्मप्रपञ्चस्फुटघटितमहामञ्चसञ्चारकेलिसम्भ्रान्त" इति च, "पञ्चब्रह्ममहामञ्चपरिष्करणकारिणीम् ।" इति पञ्चशिवात्मनि मञ्चे मिलितामिलितेत्यादिषु बहुधा श्रूयतेऽत एव सर्वं देवता समधिकशीलत्वं लोकोत्तीर्णत्वं च भगवत्याः न हि तां विना अन्यत्र श्रूयते काचन देवता काश्चन देवता आसनीकृत्य वसतीति ॥ ९४ ॥

कलङ्कः कस्तूरी रजनि करविम्बं जलमयं,
　कलाभिः कर्पूरैर्मरकतकरण्डं निविडितं ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं,
　विधिर्भूयो भूयो निविडयति नूनं तव कृते ॥ ९५ ॥

हे शिवे ! सकलभक्तकल्याणदायिनि ! चतुर्दशभुवनपरिपूर्णब्रह्माण्डमण्डलव्यापिन्यास्तदनुरूपवेषधारिण्यास्तदनुरूपभोगकर्त्र्या स्तव सततमनन्तयगभोगसम्पात्तये सर्वाण्यपि वस्तुजालानि भोगोपकरणानि इति वदन्त्याचार्याः, तत्र ब्रह्माण्डमेव गृहं वितानमूर्ध्वाण्डमेरुमन्दरविन्ध्यादयः कुचकलसं, नक्षत्राणि हारावलयः, पौत्राः सुत्राममुखाः ब्रह्मविष्णुरुद्रादयः, गृहप्रदीपो मार्तण्डः, रत्नसिंहासनं मेदिनीमण्डलमित्यादि सर्वेषु वस्तुषु शरीरोपकरणताङ्गतेषु चन्द्रमण्डलस्य कर्पूरकरण्डकत्वभगवत्याः प्रतिपादयति करण्डकं नाम–सुगन्धिवस्तु स्थापनाथ कलधौतपट्टनिर्मितो मण्डलाकारः पेटकविशेषस्तत्साम्यं चन्द्रमसो वर्तते, रजनिकरविम्वमेतावत् जलमयं जलरूपमत एव श्यामवर्णत्वान्मरकतनिर्मितं करण्डं जलस्य धावल्यं प्रसिद्धं, श्यामवर्णता कुत इति चेत् सत्यं जलस्य धावल्यमेव अतिगभीरस्य जलपूरस्यान्तर्गततिमिरसङ्घात् श्यामवर्णं यथा सामुद्रमम्भः । तच्च करण्डकं पुनः किम्भूतं कलाभिः षोडशसङ्ख्यैरेव कर्पूरैर्घनसारखण्डैर्निविडितं तत्र यो वर्तमानः कलङ्कः स कस्तूरीखण्डस्थाने कर्तव्यः, एवं भूतं कर्पूरकरण्डकविधिर्धाता भगवत्यास्ताम्वूलकरण्डकवाहवो भूत्वा सेवमानस्त्वभोगेन पूर्णिमानन्तरप्रतिपदमारभ्य एकैककलाकारकर्पूरखण्डखादनेन प्रतिदिन भक्षणे ह्रासादमावास्यादिवसे रिक्तकुहरंतत्पात्रं भूयो भूयः कलान्तरकर्पूरखण्डानादायादाय निविडयति सम्पश्यति नूनम् अयमर्थो निश्चित एव । ननु सोमोत्पत्तिः पुराणग्रन्थांशे—"प्रथमां पिवते वह्निर्द्वितीयां पिवते रविः ।" इत्यादिक्रमेण वह्न्यादिभिरेवोपभोगः प्रसिद्धः । अत्र कथं भगवत्या भोग एवेति तद्विरुद्धमुच्यते इति चेत् न वह्न्यादयोऽपि देवा भगवत्या विश्वमूर्तेर्जिह्वावयवा एव तत्प्रभावाविष्टरूपास्ते वह्न्यादयस्तदवयवतामापन्ना एव शक्तिमन्तः । तदुक्तं पञ्चस्तवे—"त्वं चन्द्रिकाशशिनि तिग्मरुचौ रुचिस्त्वं, त्वं चेतनासि पुरुषे पवनेऽखिलत्वम् । त्वं स्वादुता च सलिले शिखिनि त्वमूष्मा, निःसारमेव निखिलं त्वदृते यदि स्यात् ।" इति । किञ्च भगवता वेदपुरुषेण देवीसूक्ते ऋग्वेदान्ते सर्वदेवतामयत्वं भगवत्याः प्रत्यपादि–स्वयमेव स्वभाववेदिनी ब्रह्मादिभिरप्यतर्क्यमहानुभावा अहमेव सर्वदेवस्वरूपिणीति तथा हि-

"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः। अहं मित्रावरुणो भाविभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ अहं सोममाहनसं विभर्मि अहं त्वष्टारमुत पूषणं भगं। अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते। अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानां। तां मा देवा व्यदधुः पुरित्रा भूरिस्थात्रा भूर्या वेशयन्ती। मयासो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तं। अमन्तवो मांत उपक्षियन्ति श्रुधिश्रुत श्रद्धिवंते च वदामि। अहमेव स्वयं वदामि जुष्टं देवेभिरुत मानुषेभिः। यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवाउ। अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश। अहं सुवे पितरमस्य मूर्द्धन् मम योनिरप्सु अन्तः समुद्रे। ततो वितष्ठे भुवनानि विश्वा उत द्यां वर्ष्मणोपस्पृशामि। अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा। परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव।" इति। देवीसूक्तेषु सर्वत्र भगवत्याः सर्वदेवमयत्वं सर्वविश्वकर्तृत्वं सर्ववाणीस्वरूपत्वं स्वतन्त्रत्वमनिष्टब्रह्मद्वेषिमारकत्वं द्यावापृथिव्योरतिक्रान्तरूपत्वं सर्वमेव भगवत्या स्वकीयवक्त्रारविन्दनिर्गलितैरेव सूक्तामृतैः प्रत्यपादि, अत एव ब्रह्मादिच्छन्नचन्द्रमसः कलाकर्पूरकरण्डमण्डलं भगवत्यैव भुज्यते। सर्वभोक्त्री सैव सर्वभोक्तुर्महादेवस्य सदृशी सधर्मिणीति मन्तव्यम् ॥ ९५ ॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो,
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो,
महासंवर्ताग्निर्विरचयति नीराजनविधिं ॥ ९६ ॥

स्वदेहोद्भूताभिर्घृणिभिः, स्वस्य देहः स्वदेहः श्रीललितामहाभट्टारिकाया जगन्मङ्गलभूतं सर्वदेवोत्पत्तिस्थानं श्रीमच्छरीरं तदुद्भूताभिरणिमाद्याभिश्चक्रसिंहासनस्थितबाह्यचतुरस्रादिस्थानवर्तिनीभिः देवताभिः किञ्च घृणिभिः चलयागपूजनयोग्याभिरङ्गरूपोपादानयोग्याभिः मरीचिभिश्च, पूजाखलाचक्रसिंहासने भगवत्याः क्रियमाणा द्विप्रकारा भवति—लयाङ्गा भोगाङ्गा चेति। लयाङ्गा तु—स्थानविरहितानां चक्रसिंहासने परचिद्गुणवर्तिनीनां भगवत्याः शरीरे भासमानानां देवतानां च पूजारूपा। भोगाङ्गा तु—चक्रसिंहासने भिन्नभिन्नेषु स्थानेषु वर्तमानानामणिमादिदेवतानां पूजारूपा। तस्माद् घृणयो रश्मयस्तु लयाङ्गरूपा अणिमादयस्तु भोगाङ्गरूपा घृणिभिश्च अणिमादिभिश्च द्विप्रकारा देवताभिः सेव्ये निषेव्ये नित्ये सर्वकालमविनाशरूपे त्वां भगवतीमहमिति सदा यो भावयति तस्य परमयोगिनः किमाश्चर्यभूतं किमपि नास्ति लोके यद्भूतभूतं तत्सर्वं तस्य स्वभाव इत्यवधारणीयम्, तत्कुत इति चेत्तत्र हेतुमाह—त्रिनयसमृद्धिं महादेवस्यैश्वर्यं तच्च बहुप्रकारमष्टमूर्तिभिः जगद्व्याप्यावस्थानं सकललोकसंहारेऽपि निरपायित्वपितृकाननस्थानतद्भस्मलेपनब्रह्मकपालधारणादिभिरपि सदा

पवित्रं, दिगम्बरत्वेऽपि सदा पूज्यत्वं, कामिनीरूपवामाङ्गत्वेऽपि परमयोगित्वं, सकललोकसंहारककालकूटविषगिलनेऽपि मृत्युञ्जयत्वं, ज्ञानवैराग्यैश्वर्यतपःसत्यक्षमापतिवशित्वमात्मानन्दबोधसर्वभूताधिष्ठातृत्वाख्यदशसङ्ख्याव्ययधर्मविशेषकत्वं, सर्वज्ञत्वं, नित्यतृप्तत्वानादिबोधत्वस्वतन्त्रत्वमलुप्तशक्तित्वानन्तशक्तित्वाख्या षड्विधस्वाभाविकैश्वर्ययुक्तत्वमणिमादिसिद्ध्यैश्वर्ययुक्तत्वमित्यनन्तप्रकाशं तेषु तेषु आगमग्रन्थेषु गुरुशिष्यपरम्परया प्रकाशिता समृद्धिर्या सर्वत्र प्रख्याता, तां महादेवस्य समृद्धिं तृणायतः तृणीकुर्वतः अल्पबुद्ध्या परिभवतः तव भक्तस्य महासंवर्ताग्निः कल्पान्तपावको नीराजनविधिमारार्तिकविधिं विरचयति। एतदुक्तं भवति–अणिमादिभिः समृद्धिभिश्च सह त्वामात्मबुद्ध्या चिन्तयतस्तव भक्तस्य सर्वदेवोत्तमेन सह स्पर्द्धमानस्य युगान्तवलयोऽपि किमपि कर्तुं न प्रभवन्ति, अदाह्यत्वात्तस्य शस्त्रादिभिरप्यच्छेद्यत्वं तस्य कल्पान्तवायुभिरप्यशोष्यत्वं प्रलयकाले सप्तसमुद्राणामेकार्णवीभावेनाप्यक्लेद्यत्वं तव भक्तस्य स्वभावसिद्धम्। तथोक्तं गीतायाम् "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।" इति। किञ्च स्वरूपाभितो देहराशिभिः इत्ययं श्लोकः। सौभाग्यहृदयाख्यस्य पञ्चदशमालामन्त्रमण्डलस्य ध्यानश्लोक इति वदन्ति परममाहेश्वराचार्याः। तासां पञ्चदशमालानां पञ्चदशाक्षरमहामन्त्रस्य एकैकवर्णोद्भूतानां स्वरूपं ललितापरिशिष्टाख्ये महातन्त्रे कथितं, तत्सर्वमपि साङ्गमत्र विभज्यते। तथा चोक्तं तत्रैव ग्रन्थे–'मालामन्त्रं प्रवक्ष्यामि महारात्री महोदयं। शिखा देविपदं प्रोच्य कवचं देविशब्दतः॥ नेत्रदेव्यस्त्रदेवीति कामेश्वरि भगेति च। मालिनीति पदं नित्यक्लिन्ने पदमुदीरयेत्॥ मेरुण्डे वह्निना शब्दात् सिनिशब्दो महापदं। व्रजेश्वरि शिवदूति त्वरिते कुलसुन्दरि॥ नित्ये नीलपताके च विजये सर्वमङ्गले। ज्वालामालिनि चित्रे च महानित्ये पदं ततः॥ परमेश्वरशब्दात्तु परमेश्वरि कीर्तयेत्। मित्रेशमयि षष्ठीशमप्युड्डीशमयीति च॥ चर्यानाथमयी प्रोच्य लोपामुद्रामयीति च। अगस्त्यमपि शब्दान्ते कालतापनमप्यथ॥ धर्माचार्यमयीत्युक्त्वा मुक्तकेशीश्वरान्मयि। तथा दीपकलानाथमपि शब्दं च कीर्तयेत्॥ विष्णुदेवमयि प्रोच्य प्रभाकर पदात् पुनः। देवशब्दान्मयि पदं पदं तेजोमयीति च॥ मनोज देवमयि च कल्याणी देवशब्दतः। मणिरत्नादेवमपि वासुदेवमयीति च॥ श्रीरामानन्द इति चाणिमासिद्धि पदं वदेत्। लघिमासिद्धिः समृद्धिर्महिमासिद्धि वा पुनः॥ ईशित्वादपि सिद्धिः स्याद् वशित्वं सिद्धिबोधनम्। प्राकाम्यसिद्धिर्भुक्तेश्च सिद्धिरिच्छापदात्पुनः॥ सिद्धिः प्राप्तिपदात् सिद्धिः सर्वकामपदात् पुनः॥ सिद्धिर्ब्राह्मी च माहेश्वर्युक्ता कौमारिशब्दतः। वैष्णवीति च वाराही माहेन्द्रीति च कीर्तयेत्॥ चामुण्डे च महालक्ष्मि सर्वसङ्क्षोभणीति च। सर्वविद्रावणि प्रोच्य सर्वाकर्षणि शब्दतः॥ सर्वाद्वशीकरणी चैव सर्वोन्मादिनि शब्दतः। सर्वान् महांकुशे सर्वं खेचरीति च सर्वतः॥ बीजे सर्वपदाद् योने सर्वशब्दादयः पुनः। त्रिखण्डे त्रैलोक्यशब्दाद् मोहनेति च चक्रतः॥ स्वामिनीति प्रकटतः योगिनीति पदं वदेत्। कामाकर्षणिशब्दान्ते बुद्ध्याकर्षणि कीर्तयेत्॥ चित्राकर्षणि शब्दान्ते धैर्याकर्षणि कीर्तयेत्। अहङ्काराकर्षणीति शब्दाकर्षिणि शब्दतः॥ स्पर्शाकर्षणि शब्दान्ते रूपाकर्षणि

कीर्तयेत्। रसाकर्षणि शब्दान्ते गन्धाकर्षणि कीर्तयेत् ॥ चित्राकर्षणि शब्दान्ते धैर्याकर्षणि कीर्तयेत्। स्मृत्याकर्षणि शब्दान्ते नामाकर्षणि कीर्तयेत् ॥ बीजाकर्षणि शब्दान्ते आत्माकर्षणि कीर्तयेत्। अमृताकर्षणीत्युक्त्वा शरीराकर्षणीति च ॥ सर्वाशापरिपूरेति चक्रस्वामिनीति च। गुप्तयोगिन्यनङ्गा च कुसुमेऽनङ्गमेखले ॥ अनङ्गमदने शब्दादनङ्गमदनातुरे। अनङ्गरेखेनङ्गा च वेगिनीति ह्यनङ्गतः। अङ्कुशेऽनङ्गशब्दाच्च मालिनीति पदं वदेत्। सर्वसङ्क्षोभणाच्चक्रस्वामिनीति च गुप्ततः। तरयोगिनि शब्दाच्च सर्वसङ्क्षोभणीति च। सर्वविद्रावणीत्युक्त्वा सर्वाकर्षिणि शब्दतः। सर्वाह्लादिनि शब्दाच्च सर्वसम्मोहनीति च। सर्वस्तम्भिनि शब्दाच्च सर्वजृम्भिणि कीर्तयेत्। सर्वाद् वंशकरि पदं सर्वरञ्जनि शब्दतः। सर्वोन्मादिनि शब्दाच्च ततः सर्वार्थसाधिका। सर्वसम्पत्तिशब्दान्ते रूपिणीति पदं वदेत्। सर्वमन्त्रमयीत्युक्त्वा सर्वद्वन्द्वक्षयङ्करी। सर्वसौभाग्यदा चेति चक्रकस्वामिनीति च। सम्प्रदायाद् योगिनीति सर्वसिद्धिप्रदेति च। सर्वसम्पत्प्रदे पश्चात् ततः सर्वप्रियङ्करि। सर्वमङ्गलतः कारिण्युक्ता सर्वाच्च कामतः। प्रदे सर्वपदाद् दुःखविमोचनीति पदं ततः। सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी। सर्वाङ्गसुन्दरपदं सर्वसौभाग्यदायिनी। सर्वार्थसाधका चक्रस्वामिनीति पदं वदेत्। कुलोत्तीर्णाद् योगिनीति सर्वज्ञे सर्वशब्दतः। शक्तिसर्वैश्वर्यपदात् प्रदायिनि च कीर्तयेत्। सर्वज्ञानमपीत्युक्त्वा सर्वव्याधिविनाशिनि। सर्वाधारस्वरूपे च सर्वपापहरे तथा। सर्वानन्दमयीत्युक्त्वा सर्वरक्षास्वरूपिणी। सर्वेप्सितप्रदे प्रोच्य सर्वरक्षाकरी पुनः। चक्रस्वामिनि शब्दान्ते निर्गमाद् योगिनीति च। वशिनीति पदं प्रोच्य कामेश्वरि च मोदिनी। विमले चारुणे पश्चात् जपिनीति पदं वदेत्। सर्वेश्वरिपदं प्रोच्य कौलिनीति च कीर्तयेत्। सर्वरोगहराचक्रस्वामिनीनि हरस्यतः। योगिनीति समुच्चार्य ततो वाणिनि चापिनी। पाशिन्यङ्कुशिनिं प्रोच्य महाकामेश्वरीति च। महाव्रजेश्वरिपदं महोर्द्धभगमालिनी। महाश्री सुन्दरीत्युक्त्वा सर्वसिद्धिप्रदा पुनः। चक्रस्वामिन्यति पदाद् रहस्या योगिनीति च। त्रिपुरे त्रिपुरेशीति तथा त्रिपुरसुन्दरी। त्रिपुराद्वासिनिपदं त्रिपुराश्रीःपदं ततः। त्रिपुरान्मालिनि पदं त्रिपुरात् सिद्धिबोधनम्। त्रिपुराद्यं वचः प्रोक्ता महात्रिपुरसुन्दरी। महामाहेश्वरि महा महाराज्ञी महा महा। महाशक्ते महागुप्ते ततश्चैव महा महा। ज्ञप्ते महामहानन्दे ततश्चैव महा महा। स्कन्दे महा महाशब्दादशये परिकीर्तयेत्। ततो महा महाकीर्ति चक्रनगरात्ततः। पुनः सम्राज्ञिपदमुच्चार्य नमस्तेत्रितयं पुनः। अग्निजाया विलोमेन त्रितारीति च कीर्तितः। मालामन्त्रो महादेव्याः सर्वसिद्धिप्रदायकः। एवं त्रिंशत् सहस्राणि त्रिलोकी मोहनक्षमः" यथा—ऐंह्रींश्रीं ॐ नमस्त्रिपुरसुन्दरि हृदयदेवि, शिखादेवि, कवचदेवि, नेत्रदेवि, अस्त्रदेवि, कामेश्वरि, भगमालिनि, नित्यक्लिन्ने, मेरुण्डे, वह्निवासिनि, महाव्रजेश्वरि, शिवदूति, त्वरिते, कुलसुन्दरि, नित्ये, नीलपताके, विजये, सर्वमङ्गले, ज्वालामालिनि, चित्रे, महानित्ये, परमेश्वरि, मित्रेशमयि, षष्ठीशमयि, उड्डीशमयि, चर्यानाथमयि, लोपामुद्रामयि, अगस्त्यमयि, कालतापनमयि, धर्माचार्यमयि, मुक्तकेशीश्वरमयि, दीपकलानाथमयि, विष्णुदेवमयि, श्रीरामानन्दमयि,

(श्रीमानानन्दमयि) अणिमासिद्धे, लघिमासिद्धे, महिमासिद्धे, ईशित्वसिद्धे, वशित्वसिद्धे, प्राकाम्यसिद्धे, मुक्तिसिद्धे, इच्छासिद्धे, प्राप्तिसिद्धे, सर्वकामसिद्धे, माहेश्वरि, कौमारि, वैष्णवि, वाराहि, माहेन्द्रि, चामुण्डे, महालक्ष्मि, सर्वसङ्क्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्ववशीकरिणि, सर्वोन्मादिनि, सर्वमहांकुशे, सर्वखेचरि, सर्वबीजे, सर्वयोनि, सर्वत्रिखण्डे, त्रैलोक्यमोहनचक्रस्वामिनि, प्रकटयोगिनि, कामाकर्षिणि, अहङ्काराकर्षिणि, शब्दाकर्षिणि, स्पर्शाकर्षिणि, रूपाकर्षिणि, रसाकर्षिणि, चित्ताकर्षिणि, धैर्याकर्षिणि, सर्वाशापरिपूरचक्रस्वामिनि, गुप्तयोगिनि, अनङ्गकुशे, अनङ्गमालिनि, सर्वसङ्क्षोभणचक्रस्वामिनि, गुप्ततरयोगिनि, सर्वसङ्क्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्वाह्लादिनि सर्वसम्मोहिनि, सर्वस्तम्भिनि, सर्वजम्भिणि, सर्ववशङ्करिणि, सर्वरञ्जनि, सर्वोन्मादिनि, सर्वार्थसाधिके, सर्वसम्पत्तिरूपिणि, सर्वमन्त्रमयि, सर्वद्वन्द्वक्षयङ्करि, सर्वसौभाग्यचक्रस्वामिनि, सम्प्रदाययोगिनि, सर्वसिद्धिप्रदे, सर्वसम्पत्प्रदे, सर्वप्रियङ्करि, सर्वमङ्गलकारिणि, सर्वकामप्रदे, सर्वदुःखविमोचिनि, सर्वमृत्युप्रशमिनि, सर्वविघ्ननिवारिणि, सर्वाङ्गसुन्दरि, सर्वसौभाग्यदायिनि, सर्वार्थसाधकचक्रस्वामिनि, कुलोत्तीर्णयोगिनि, सर्वज्ञे, सर्वशक्ति, सर्वैश्वर्यप्रदायिनि, सर्वज्ञानमयि, सर्वव्याधिविनाशिनि, सर्वाधारस्वरूपे, सर्वपापहरे, सर्वानन्दमयि, सर्वरक्षास्वरूपे, सर्वेप्सितफलप्रदे, सर्वरक्षाकरचक्रस्वामिनि, गर्भयोगिनि, वशिनि, कामेश्वरि, मोदिनि, विमले, अरुणे, जयिनि, सर्वेश्वरि, कौलि, सर्वरोगहरचक्रस्वामिनि, रहस्ययोगिनि, वाणिनि, चापिनि, अङ्कुशिनि, महाकामेश्वरि, महाव्रजेश्वरि, महाभगमालिनि, महाश्रीसुन्दरि, सर्वसिद्धिप्रदचक्रस्वामिनि, अतिरहस्ययोगिनि, श्रीश्रीभट्टारिके, सर्वानन्दमयचक्रस्वामिनि, परापररहस्ययोगिनि, त्रिपुरे, त्रिपुरेशि, त्रिपुरसुन्दरि, त्रिपुरवासिनि, त्रिपुराश्री, त्रिपुरमालिनि, त्रिपुरसिद्धे, त्रिपुराम्बामहात्रिपुरसुन्दरि, महामाहेश्वरि, महामहाराज्ञि, महाशक्ते, महागुप्ते, महामहाज्ञप्ते महामहानन्दे, महामहास्कन्दे, महामहाशये, महामहाश्रीचक्रनगरसम्राज्ञि नमस्ते नमस्ते स्वाहाश्रीं ह्रीं ऐं। "एषा विद्या महासिद्धिदायिनीस्मृतिमात्रतः। अग्निवातमहाक्षोभे राजराष्ट्रस्य विप्लवे। लुण्ठकेतस्करभये सङ्ग्रामे सलिलप्लवे। समुद्रयानविक्षेपे भूतप्रेतादिजे भये। अपस्मारज्वरव्याधिमृत्युजन्मादिजे भये। मित्रभेदे ग्रहभये व्यसने चाभिचारिके। अन्येष्वपि च देशेषु मालामन्त्रं स्मरेन्नरः। सर्वोपद्रवनिर्मुक्तः साक्षाच्छिवसमो भवेत्। आपत्काले नित्यपूजां विस्तरात्कर्तुमक्षमः। एकावर्तनमात्रेण सर्वपूजाफलं लभेत्। मालामन्त्रविधानन्तु प्रवक्ष्याम्यनुपूर्वशः। सर्वसङ्कल्पसंसिद्धिरेतज्ज्ञानाद् भवेन्नरः (त्वा नरो भवेत्)। नवावरणदेवीनां ललितायामहौजसः। एकावर्तनमात्रेण वेदवेदाङ्गगोचरः। सर्वागमरहस्यार्थस्मरणात् पापनाशिनी। ललिताया महेशान्या मालाविद्या महीयसी। नरवश्यं नरेन्द्राणां वश्यं नारीवशङ्करम्। अणिमादिगुणैश्वर्यं रञ्जनं पापभञ्जनम्। तत्तथावरुणस्यापि देवता मन्त्रजं···। मालामन्त्रमयं गुह्यं परं धाम प्रकीर्त्यते। शक्तिमाला पञ्चधा स्यात् शिवमाला च तादृशी। द्वन्द्वमाला च तादृक् स्यात् एवं पञ्चदश क्रमात्। एकैकललितामन्त्रवर्णादभ्युदिता इमाः। शुद्धा नमोन्ता स्वाहान्ता तर्पणान्ता जपान्तकाः। प्रवृत्तयः पञ्चधा स्युर्मालासु निखिलास्वपि। ऋषिच्छन्दो देवताश्च

**विष्णुपक्षे**—नासावंशः कीदृशः ? तुहिनगिरिवंशध्वजपटो गौरीरूपोऽस्यास्तीति तुहिनगिरिवंशध्वजपटी महादेवस्तस्य भावस्तुहिनगिरिवंशध्वजपटित्वं तद् ददातीति तुहिनगिरिवंशध्वजपटित्वदः शिवसायुज्यदो विष्णुः तदीयः तत्सम्बन्धी, शेषं समानम् । "नासाग्रे गजमौक्तिकं करतले वेणुं करे कङ्कणम्" इत्यादि गोपालध्यानान्नासाग्रमौक्तिकवर्णनमुपपन्नम् ॥ ६० ॥

**प्रकृत्येति**—हे सुदति ! प्रकृत्या स्वभावेन रक्ताया लोहिताया तव दन्तच्छदरुचेरधरकान्तेः सादृश्यं प्रवक्ष्ये विद्रुमलता तर्हि फलं जनयतु, प्रत्यक्ष इत्यत्र वराकीति फलमित्यत्र च कथमिति समीचीनः पाठः, बिम्बकलया एकदेशीयेनापि कथमपि कष्टेन तुलामध्यारोढुं न लज्जे अपि तु लज्जेतैव, कथमिवेति पाठे इवशब्दो वाक्यालङ्कारे, कीदृशं बिम्बं ? त्वत्प्रतिबिम्बप्रतिफलनलाभादरुणितं त्वन्मूर्तिप्रतिबिम्बवशाद् रक्तं दृग्बिम्बप्रतिफलनेति क्वचित्पाठः तत्र दृग्बिम्बः सूर्यबिम्बः सूर्यस्य त्वद्दक्षिणनेत्ररूपत्वात् तत्र प्रतिफलनं पाकः तल्लाभादित्यर्थः ।

**विष्णुपक्षे**—सुदति शोभनदन्ते सादृश्यं प्रकृत्या रक्ताया दन्तच्छदरुचश्च सादृश्यं प्रवक्ष्ये इत्यर्थः । दन्तच्छदारुण्यवर्णनं सुन्दरीगोपालमूर्त्यभिप्रायेण ॥ ६१ ॥

**स्मितेति**—तव वदनचन्द्रस्य त्वन्मुखेन्दोः स्मितमीषद्धास्य एव ज्योत्स्ना तस्या जालं समूहं पिबतां चकोराणामतिरसतया अत्यन्तमधुरतया चञ्चुजडिमा अरुचिरासीत् अतो हेतोः अरुचिनाशार्थं ते चकोरा अम्लरुचयः सन्तः काञ्जिक आरनालबुद्ध्या निशि निशि रात्रौ भृशमतिशयेन स्वच्छन्दं स्वेच्छया शीतांशोश्चन्द्रस्य अमृतलहरीं सुधाधारां पिबन्तीत्यर्थः । विष्णुपक्षेऽप्येवम् ॥ ६२ ॥

**अविश्रान्तमिति**—हे जननि ! तव जिह्वा रसना विजयते, पत्युः शिवस्य अविश्रान्तं निरन्तरं गुणगणकथायाः धर्मज्ञानवैराग्यैश्वर्यादिजल्पनस्य आम्रेडनेनावर्तनेन जडा इतरशब्दग्रहणवैमुख्येन तदेकनामग्रहणमात्रोपलक्षणशक्तिका जपापुष्पच्छाया ओड्रपुष्पकान्तिः यस्या जिह्वाया अग्रे आसीनाया उपविष्टायाः, सरस्वत्या मूर्तिः स्फटिकदृषद् स्फटिकपाषाण तद्वदच्छा विमलस्वेच्छा छविः कान्तिः तन्मया तद्युक्ता माणिक्यवपुषा माणिक्यसमानरूपेण परिणमति श्वेतं रूपं त्यक्त्वा रक्तं रूपं बिभर्तीति भावः ।

**विष्णुपक्षे**—पत्युः पालकस्य तव जननं प्रादुर्भावो देहपरिग्रहोऽस्यास्तीति जननी तस्य जननिनः कृतदेहपरिग्रहस्य जिह्वा जननि जिह्वा विजयते । जननीति पूर्ववत् विष्णुसम्बोधनं, शेषं समानम् ॥ ६३ ॥

**रणे जित्वेति**—हे मातः ! रणे युद्धे देवशत्रून् जित्वा परिभूय अपहृतानि त्यक्तानि शस्त्राणि मुकुटानि यैः कवचिभिः अमुक्तवर्मभिः निवृत्तैः समरतः परावृत्तैः चन्द्रस्य चन्द्रेश्वरस्य योंऽशः भागः त्रिपुरहरनिर्माल्यं तत्र विमुखैः शिवनिर्माल्यस्याभक्ष्यत्वात् विरिञ्चीन्द्रोपेन्द्रैः ब्रह्मेन्द्रविष्णुभिः शशिशिशिरकर्पूरधवला शशिवत् शिशिरशीतलेपः कर्पूरः तेन धवलाः श्वेताः 'शशिशकलकर्पूरधवला' इत्यपि पाठः तत्र शशिशकलं चन्द्रखण्डः कर्पूरश्च तद्वद्धवला इत्यर्थः, तव वदनताम्बूलशकलाः खण्डा विलुप्यन्ते अहमिकया गृह्यन्ते इत्यर्थः ।

**विष्णुपक्षे**—मातः लक्ष्मीतः निवृत्तैः त्वदङ्कस्थितलक्ष्मीनिर्माल्यं परित्यज्य त्वन्निर्माल्यमुपाददत इत्यर्थः। यद्वा अमा अति इति छेदः। त्रिपुरहरनिर्माल्यविमुखैः अमा सह यतः शशिशकलकर्पूरधवला अतो विलुप्यन्ते इत्यर्थः, उप समीपे इन्द्रो विद्यते यस्यासावुपेन्द्रो जयन्तादिः ॥ ६४ ॥

**विपञ्च्येति**—विपञ्च्या वीणया विविधं नानाप्रकारं पुररिपोर्महेशस्यावदानं निर्मलचरितं गायन्ती वाणी सरस्वती निभृतं यथा स्यात्तथा चोलेनोपरिस्थवस्त्रेण वीणां लज्जया निचुलयति आच्छादयति; लज्जाहेतुवदनवीणां विशिनष्टि—त्वया चलितशिरसा कम्पितशिरसा साधुवचने साधुवादे वक्तुमारब्धे सति त्वदीयैः साधुवचनसम्बन्धिभिः माधुर्यैः अपलपितो निह्नुतः तन्त्रीणां कलो रवो यस्याः सा इत्यर्थः। विष्णुपक्षेऽप्येवम् ॥ ६५ ॥

**कराग्रेणेति**—हे गिरिसुते! तव चुबुकं कथङ्कारं केन प्रकारेण ब्रूमः वर्णयामः?। तत्र हेतुः-औपम्यरहितसादृश्यप्रतियोगिन उपमानस्य विरहात् तुहिनगिरिणा हिमालयेन वत्सलतया पुत्रीस्नेहेन कराग्रेण हस्ताग्रभागेन स्पृष्टं गिरिशेन शिवेन अधरपानाकुलतया मुहुः वारंवारमुदस्तं तोलितं करैर्ग्राह्यं करग्रहणयोग्यं मुखं मुकुरस्य मुखादर्शस्य वृन्तं दण्डमित्यर्थः।

**विष्णुपक्षे**—तुहिनस्य हिमस्य गिरिः पर्वतो यत्रासौ तुहिनगिरिश्चन्द्रस्तेन कराग्रेण किरणाग्रेण स्पृष्टं हे वत्सल! हे गिरिशस्य महेशस्यापि इनः ईश्च तया प्रसिद्धया लक्ष्म्या राधाया वा अधरपानाकुलतया मुहुरुदस्तमुत्तोलितं शम्भोः कल्याणजनकस्य सूर्यस्य करग्रहणयोग्यं कमलसदृशत्वात् अथवा शं कल्याणं भवत्यस्मादिति शम्भोस्तव चिवुकमित्यन्वयः; करग्राह्यमर्थाल्लक्ष्म्या राधाया वा, कीदृशं चिवुकं गिरिसुते कथङ्कारं गिरिसुता पार्वती ईः लक्ष्मीस्तयोः कथमिदं सृष्टमिति शब्दकारकमौपम्यरहितं ब्रूम इत्यन्वयः, गिरिसुते इति पूर्ववद् विष्णुसम्बोधनं वा ॥ ६६ ॥

**भुजाश्लेषादिति**—पुरदमयितुः शिवस्य भुजाभ्यामाश्लेषादालिङ्गनात् कण्टकवती तवेयं ग्रीवा मुखकमलस्य मुखारविन्दस्य नालश्रियं काण्डशोभां धत्ते; स्वतः स्वभावतः श्वेता कालागुरुबहलजम्बालेन कृष्णागुरुसमूहपङ्केन मलिना हारलतिका, अहो आश्चर्ये, मृणाली लालित्यं बिसशोभां यत् यस्माद् वहति धत्ते; यदहो इत्यत्र 'तदध' इत्यपि पाठः, तत्र तदधो-ग्रीवाया अधः इत्यर्थः।

**विष्णुपक्षे**–पुरस्य जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयस्य दमयितुर्नाशकस्य तव भुजाश्लेषाल्लक्ष्मीभुजालिङ्गनात्। यद्वा कण्टकवती ईहतः व ग्रीव इति पदच्छेदः। ईः लक्ष्मीस्तामिति युक्त हे, वकारो इवार्थे उत्प्रेक्षाद्योतकः नालश्रियमित्यनन्तरं योज्यः। अथवा ईः लक्ष्मीस्तस्या-मितरे लक्ष्म्यानुगतं विष्णुं वातीति ईनवा सा चासौ ग्रीवा चेति भगवदाश्लिष्टा लक्ष्म्या ग्रीवेत्यर्थः कीदृशी पुरदमयितुस्तव भुजाश्लेषोत्कण्टकवतीत्यर्थः, शेषं समानम् ॥ ६७ ॥

**गले रेखा इति**—हे गतिगमकगीतैकनिपुणे! गतिस्तत्तत्स्वरूपज्ञानं तस्य गमकं ज्ञापकं सङ्गीतशास्त्रं तत्र यानि गीतानि तत्र निपुणे चतुरे। वस्तुतस्तु गतिः रागसङ्गीतं गमकस्थायि-

स्वरस्य पुनः पुनः घोषणं गीतं समुचितार्थप्रबन्धसन्दर्भः । तदुक्तम्—"गतिस्तु रागसङ्गीतं स आलापः प्रकीर्तितः । गमको मुख्यनादस्य परिभावो रसात्मकः ॥ गीतं प्रबन्धरूढार्थ-रञ्जिता रक्तिरिष्यते ।" इति ।

एतेष्वेकनिपुणे परमचतुरे तव गले तिस्रो रेखा विराजन्ते शोभन्ते । कीदृश्यः ? विवाह-कर्मणि व्यानद्धो विशेषेण बद्धः त्रिगुणो यो गुणः मङ्गलसूत्रं तत्र या त्रित्वसङ्ख्या तस्याः प्रतिभुवो निर्णेत्र्यः । तदुक्तम्—"ब्रह्मविष्णवीशरूपेषु रन्ध्रवृत्तत्रितं तु कम् । त्रिरत्नं रुक्मजं स्त्रीणां मङ्गल्याभरणं विदुरिति ।" पाठान्तरे विवादार्थं व्यानद्धो बद्धो यः प्रगुण उत्कृष्टो गुणस्त-न्तुस्तस्य या सङ्ख्या तत्प्रतिभुवस्तज्ज्ञापिका यावज्जयं प्रतिवादिनो गुणबन्धनं कुर्वन्तीत्या-चारः । नानाविधानां मधुराणां रागाणां षड्जमध्यमादिसप्तस्वरानुबन्धः वसन्तगौडगुर्जर-कर्णाटादिगीतानां आकर उत्पत्तिस्तस्या भूमिरूपाणां त्रयाणां त्रिसङ्ख्यकानां ग्रामाणां षड्ज-मध्यमपञ्चमानां ग्रामाणां स्थितिनियमसीमान इव परस्परकलहाविष्टानां ग्रामाणां स्थित्यै यो नियमस्तदर्थं सीमान इव मर्यादा चिह्नरूपा इवेत्यर्थः । विष्णुपक्षे गतिगमकेत्यादि गलस्य विशेषणं, शेषं समानम् ॥ ६८ ॥

**मृणालीति**—मृणालीवत् सरोजन्यं कुर्वन् मृद्वी कोमलानां चतसृणां चतुःसङ्ख्यकानां तव भुजलतानां बाहुवल्लीनां सौन्दर्यं शोभां सरसिजभुवो ब्रह्मा चतुर्भिर्वदनैः करणभूतैः स्तौति, प्रथमदलनात् पञ्चममुखस्य प्रथमकर्तनात् अन्धकरिपोर्महेशस्य नखेभ्यः सन्त्रस्यन् बिभ्यत्, अवशिष्टानां चतुर्णां शीर्ष्णां मस्तकानां समं युगपदेव अभयस्य भीत्यभावस्य हस्तै-र्पर्ण(पर्णं)धिया दल बुद्ध्या । विष्णुपक्षेऽप्येवम् ॥ ६९ ॥

**नखानामिति**—नखानां करजानामुद्द्योतैः प्रभाभिः नवनलिनरागं नूतनशतपत्रशोभां विहसतां तिरस्कुर्वतां ते तव कराणां कान्तिं सौन्दर्यं कथं केन प्रकारेण अमी वयं कथयामः । 'अमूमिति' पाठे कान्तिविशेषणम्, 'उमे' इति पाठे सम्बोधनम् । क्रीडन्त्या विहरन्त्या लक्ष्म्याश्चरणतललाक्षया अरुणदलं रक्तपत्रं यदि कदाचित् तदा कमलं कलया एकदेशेन साम्यं सादृश्यं भजति धत्ते नान्यथेत्यर्थः; कमलसाम्यं तव कराणां दूरे तिष्ठतु कमलानामेव तव करसाम्यं कादाचित्कमिति भावः ।

**विष्णुपक्षेऽप्येवम्**—उमे इति पाठे उत्कृष्टा मा लक्ष्मीः प्रमाणेनोपनिषद्रूपं विद्यते यस्य तस्मिन् त्वयि विद्यमानानां तव कराणां कान्तिं तवेदं कथं कथयाम इत्यन्वयः । उत्कृष्टं मानं परिमाणं यस्य तस्मिन्नुमे भूमण्डले इतिवार्थः ॥ ७० ॥

**समं देवीति**—हे देवि ! द्योतनशीलं समं युगपदेव स्कन्दः कार्तिकेयः द्विपवदनो गणेश-स्ताभ्यां पीतमास्वादितं सततं प्रस्नुतमुखं सदा क्षरत्क्षीरमुखं तव स्तनयुगं नोऽस्माकं खेदं दुःखं हरतु नाशयतु; यत्स्तनयुगमालोक्य आशङ्कया तर्केणाकुलितं हृदयं मनो यस्या त एवं हासजनकः स्तनयुगे स्वकुम्भभ्रमाद् हेरम्बो गणेशः स्वकुम्भौ निजमस्तकौ हस्तेन झटिति शीघ्रं परिमृशति तिष्ठति नवेति सन्देहेन स्पृशति इति भावः ।

**विष्णुपक्षे**—स हेरंम्ब इति सम्बन्धः। हे मन्दे ! मन्दो न्यूनः इः कामो यस्य असौ मन्दे "एङ्ह्रस्वादिति सम्बुद्धौ" सु लोपः, हे विस्कन्द द्विपवदन विगतः स्कन्दो द्विपवदनो यस्मात् स तथा तव पीतं इदं स्तनयुगं यशोदाया नः खेदं हरतु, शेषं समानं। सुन्दरी गोपालाभिप्रायेण वा स्तनवर्णनम् ॥ ७१ ॥

**अमू ते वक्षोजाविति**—हे नगपतिपताके ! ते तव अमू वक्षोजौ अमृतरसस्य मणिनवरत्नकलशौ भवतः अत्र नोऽस्माकं मनसि न सन्देहस्य स्पन्दलेशो यस्मात् कारणात् तौ वक्षोजौ पिवन्तौ द्विरदवदनक्रौञ्चदमनौ गणपतिस्कन्दौ अद्यापि कुमारौ त्वत्स्तनपानादेव तयोर्न जरेति भावः। कीदृशौ अविदितवधूसङ्गमरसौ अज्ञातस्त्रीसम्भोगसुखावित्यर्थः।

**विष्णुपक्षे**—अमू द्विरदवदनक्रौञ्चदमनौ ते तव विराड्रूपस्य वक्षोजौ स्तनौ वक्षः हृदयम्, अजौ अजन्मानाविति वा कीदृशौ अमृतरसस्य माणिक्यकलशौ यस्मात् पिवन्तौ वर्तेते तस्मात् अद्यापि तौ कुमारौ नगपतिपताके नगानां पतिर्विष्णुः स एव पताकायशःख्यापको यस्मिन् इत्यर्थः ॥ ७२ ॥

**वहत्यम्वेति**—हे अम्व ! मातः, तव कुचाभोगः मुक्तामणिभिः समारब्धां घटिताममलां निर्मलां हारलतिकां वहति, मणिभिः कीदृशैः ? स्तम्बेरमदनुजकुम्भप्रकृतिभिः स्तम्बेरमदनुजो गजासुरः तस्य कुम्भ एव प्रकृतिर्जन्मस्थानं येषां तैः तथा विम्वाधररुचिभिः अधरविम्वकान्तिभिः अन्तःशवलितां भिन्नवर्णकृतामिव प्रतापेन लोहितवर्णेन व्यामिश्रां सङ्गतां पुरविजयिनो महेशस्य शुभ्रां कीर्तिमिव तथा च गजासुरमारणेन यः शिवस्य प्रतापो या च कीर्तिस्तामिव तव कुचाभोगो विभर्तीति भावः।

**विष्णुपक्षे**—हे अम्व ! जगन्नेत्र जगज्जनक वा त्रीणि अम्वकानि नेत्राणि यस्य त्रयाणां लोकानामम्वकःपितेत्यमरादिटीकाकृद्भिरम्वकपदव्याख्यानात्। शेषं समानम् ॥ ७३ ॥

**तव स्तन्यमिति**—हे धरणिधरकन्ये ! तव स्तन्यं स्तनोद्भूतं दुग्धं हृदयतः सारस्वतः सरस्वतीसम्वधिपयःपारावारः क्षीरसमुद्रः परिवहति इति मन्ये, दयावत्या त्वया दत्तं यत्स्तन्यं तव द्रविडशिशुर्मल्लक्षण आस्वाद्य प्रौढानां कवीनां मध्ये कमनीय उत्कृष्ट कवयिता कविराजो जात इत्यर्थः।

अत्र पूर्वं काञ्चीदेशे ऋषिशापाद् ब्राह्मणो हेमकन्दोऽवतीर्णः; स पितरि देशान्तरं गते मातरि च पानीयार्थं गतायां षण्मासवयस्कः प्राङ्गणे क्षुधया रुदन्नासीत्। एतस्मिन् एव काले आकाशे शिवेन सह गच्छन्त्या शिवया अति कारुण्याद्भूतलमागत्य स्तन्यमस्मै दत्वाऽन्तर्हितम्। तदवधि स च महाकविर्जात इति वदन्ती।

**विष्णुपक्षे**—हे धरणिधरकन्ये ! धरणिधरकन्याया इः कामो वाञ्छितं यस्मात् स तथा 'एङ्ह्रस्वादिति' सुलोपः। तव हृदयतः हृदययावति करुणाशालिनि आदत्तं स्तन्यं स्तनोचितं हाररूपं वस्तु सारस्वतः पयःपारावारः कमनीयः परिवहति इति मन्ये। यत्स्तन्यं हाररूपं वस्तु तव द्रविडशिशुरास्वाद्य ध्यात्वा कवयिताऽजनि इत्यर्थः।

यद्वा दयावत्या यशोदया दत्तं स्तन्यं तव हृदयतो वहतीति सारस्वतः पारावारद्रवं मन्ये द्रविडशिशुरातीति द्रविडशिशुरा पार्वतीरूपा यशोदाया कन्या यत्स्तन्यमास्वाद्य प्रौढानां कवीनामितामनुगतामनुकूला अजनि हे कवे ! ॥ ७४ ॥

**हरक्रोधेति**—हे अचलतनये पर्वतपुत्रि ! हरक्रोधज्वालावलिभिः शिवकोपपावकज्वाला-समूहैः अवलीढेन व्याप्तेन वपुषा शरीरेण मनसिजः कन्दर्पः स्वरक्षार्थं तव गभीरे नाभी-सरसि कृतझम्पो जात इति शेषः । तस्मान्नाभीसरसः धूमलतिका काचन समुत्तस्थौ तप्तायः-पिण्डसंयोगेन जलाद्धूमलतिका तव रोमावलिरिति जनो जानाति, जननीति सम्बोधनम् ।

**विष्णुपक्षे**—नाभीसरसि कीदृशे ? अचलतनये न चलति वेदमार्गादित्यचलो ब्रह्मा स एव तनयो यस्य तस्मिन्, नाभीत एव ब्रह्मण उत्पत्तेः जननमुत्पत्तिरस्यास्तीति जननि जननि च तद्रोम चेति जननिरोम तस्यावलिः समूहः नूतनरोमावलिरित्यर्थः । जननीति पूर्ववद्विष्णु-सम्बोधनं वा ॥ ७५ ॥

**यदेतदिति**—हे शिवे हे जननि ! तव कृशे मध्ये कालिन्द्या यमुनायाः तनुतरोऽति-सूक्ष्मो यस्तरङ्गो वीचिस्तदाकृतिः तदनुकारि यदेतत्किञ्चिन्नीलरेखात्मकं वस्तु तदन्योऽन्यं परस्परं कुचकलशयोर्विमर्दात् सङ्घर्षणात् तनूभूतं चूर्णीभूतं व्योम आकाशं कुहरिणीम-भ्यन्तरगभीरदेशयुक्तां नाभीं प्रविशदिव सुधियां भातीत्यर्थः ।

**विष्णुपक्षे**—मध्ये कीदृशे ? शिवे शोभने व्योम कीदृशं; जननमुत्पादनमस्यास्तीति जननि जगज्जनकमित्यर्थः । जननीति पूर्ववद्विष्णुसम्बोधनं वा अन्योऽन्यं लक्ष्मीनारायणयोर्विम-र्दात् आलिङ्गनात् तनूभूतं कुचकलशयोरर्थाल्लक्ष्या अन्तर्गतं मध्यवर्ति, शेषं समानम् ॥ ७६ ॥

**स्थिरो गङ्गावर्त इति**—हे गिरिजे ! तव नाभी इति अनेन प्रकारेण विजयते सर्वोत्क-र्षेण वर्तते, प्रकारमेवाह—स्थिरः स्थैर्यशाली गङ्गाया आवर्तः भ्रमिः तथा स्तनावेव मुकुलौ यस्याः सा स्तनमुकुला सा चासौ रोमावलिलता रोमराजिरूपिणी वल्ली तस्या आलवालं जलधारणार्थं गर्तविशेषः 'निजावालमिति' क्वचित्पाठः । तत्र निजं स्वीयमावालम् "तदेव स्या-दालवालमावापोऽथ नदी सरित् ।" इत्यमरः । तथा कुसुमशरः कामस्तस्य तेजो हुतभुजः प्रतापाग्नेः कुण्डम् अग्न्यालयः तथा अग्नेः कामपत्न्याः किमप्यनिर्वचनीयं लीलागारं क्रीडा-मन्दिरं तथा गिरिशनयनानामानन्दरूपायाः सिद्धेः कारणीभूतं विलद्वारमित्यर्थः ।

**विष्णुपक्षे**—हे गिरिजे ! गिरिजाया पार्वत्या इः कामो वाञ्छितं यस्मात् विः पक्षी गरुडस्तं लात्यनुगृह्णाति इति हे विल ! यद्वा गिरिजा पार्वती ईः लक्ष्मीः विः गरुडस्तांल्लात्यनु-गृह्णाति इति हे गिरिजेविल गिरिशनयनानां सिद्धेः कामभस्मीकरणदूरदर्शनादिरूपाया द्वारम्, त्वन्नामध्यानादेव दूरदर्शनादिसिद्धिर्महेशस्येति भावः । शेषं समानम् ॥ ७७ ॥

**निसर्गेति**—हे शैलतनये ! ते तव मध्यस्य कुशलं भवतु, कीदृशस्य ? निसर्गेण स्वभावेन क्षीणस्य कृशस्य तत्रापि स्तनतटभरेण कुचाभोगभारेण क्लमजुषः क्लेशयुक्तस्य तत एव नमन्मूर्तेः भारसहिष्णुताविरहेण प्रह्वीभूतवपुषः नाभौ वलिषु च शनकैर्मन्दं मन्दं त्रुट्यत इव त्रुटितश्वासौ तटिनीतीरतरुश्च तेन समा समाना अवस्था दशा तस्याः स्थेमा स्थिति-र्यस्येत्यर्थः ।

**विष्णुपक्षे**—हे शैलतनये ! शैलतनयाया ईः लक्ष्मीः सम्पत्तिस्तस्मादित्यर्थः । यद्वा शैलतनयस्य ईः लक्ष्मीर्यस्य स तथा उभयोः समुद्रशायित्वात् अर्द्धलक्ष्मी हरेः सुन्दरी गोपालस्य वा वर्णनाभिप्रायेण स्तनतटभारेणेत्यादि स्तनवत्तटं विद्यते यस्याऽसौ स्तनतटो गोवर्द्धन इति वा शेषं समानम् ॥ ७८ ॥

**कुचौ सद्यः स्विद्यदिति**—हे देवि ! सद्यः तत्क्षणादेव स्विद्यतो यौवनोष्मणः शिवविषयकानुरागेण वा स्वेदं मुञ्चतोस्तटयोः कुचतटयोर्घटितस्य निवेशितस्य कूर्पासस्य चीनांशुककञ्चुकस्य भिदुरौ भेदनशीलौ दोर्मूले बाहुमूलद्वयं कषन्तौ व्याप्नुवन्तौ तव कुचौ कनककलशाभौ स्वर्णकुम्भप्रतिमौ कलयता जानता तनुभुवा कन्दर्पेण अवलग्नमुदरभङ्गात्त्रातुं रक्षितुं त्रिवलिलवली वल्लिभिः तिसृभिर्मध्यरेखाभिरेव लवली संज्ञकाभिर्वल्लिभिर्लताभिर्बद्धाभिर्वेत्यर्थः ।

**विष्णुपक्षे**—कान्तायाः कुचौ कनककलशाभौ उन्मत्तबीजपरिपूर्णकुम्भद्वयसमौ मदहेतु-कलयता जानता तनुभुवा तनुः शरीरं भूराश्रयो यस्य तेन जीवेन तवोदरं त्रिधा श्रवण-मनन-निदिध्यासनरूपप्रकारत्रयाणां त्रिवलिलवलीवल्लिभिरिवबद्ध.........। ध्यानमित्यर्थः । किमर्थं भङ्गाद् भ्रंशात् अवलग्नं तत्रैव सम्बद्धमात्मानं त्रातुमुदरं कीदृशं देवो ब्रह्मा अस्मिन्नस्तीति देवि इन्नन्तनपुंसकमिदंपदमथवा तनुभुवा स्वशरीरोत्पन्नेन ब्रह्मणा अवलग्नं संयुक्तं देवि सकलदेवाश्रयमित्यर्थः ॥ ७९ ॥

**गुरुत्वमिति**—हे पार्वति ! क्षितिधरपतिर्हिमालयः निजात् स्वकीयात् नितम्बात् कटक-प्रदेशात् गुरुत्वं विस्तारं चाच्छिद्य पृथक् कृत्य त्वयि भवत्या हरणरूपेण विवाहसमये दासक-रूपेण निदधे निवेशितवान् "विवाहादिषु यद्देयं स दायो हरणं च तदि"त्यमरः । अतो हेतोस्ते नितम्बप्राग्भारः जघनभार "प्राग्भारश्चैव भारश्च तथाप्यन्तःसमर्थकः" इति विश्वकोषात् । विस्तीर्णगुणगौरवशाली अशेषां सर्वां वसुमतीं पृथ्वीं स्थगयति आच्छादयति । लघुत्वं लाघवाधारतां च नयति प्रापयति इत्यर्थः ।

**विष्णुपक्षे**—गुरुत्वं कीदृशं ? पर्वतस्येदं पार्वति त्रिप्रत्ययान्तं नपुंसकपदमेतत् त्वयि गुरुत्वं निदधे, हे हरणरूपेण हरणं मनोहारि रूपं यस्याः सा हरणरूपा लक्ष्मीः तस्या इनः ईश्वरः टतवर्गीय नकारणकारयोः श्लेषः भेदः हरणरूप इन इति सम्बोधनद्वयं वा ते तव वामनमूर्तिः, शेषं समानम् ॥ ८० ॥

**करीन्द्राणामिति**—हे गिरिसुते ! उभाभ्यामूरूभ्यां करीन्द्राणामैरावतादीनां शुण्डा हस्ता तथा कनककदलीस्वर्णस्तम्भास्तस्या काण्डपटली स्तम्भसमूहमित्युभयमपि निर्जित्य सुवृत्ताभ्यां शोभनप्रकारेण वर्तुलाभ्यां पत्युर्महेशस्य प्रणतिभिः कठिनाभ्यां जानुभ्यां विबुधकरिकुम्भद्वयमपि ऐरावतमस्तकयुगलमपि भवती विजिग्ये जितवतीत्यर्थः ।

**विष्णुपक्षे**—गिरिसुताया इः कामः वाञ्छितम् ईः लक्ष्मीः सम्पत्तिर्वा यस्मात् हे गिरिसुते ! भवति त्वयि वर्तमाना ईः लक्ष्मीः शोभा उभयमपि उक्तं निर्जित्य विबुधकरिकुम्भद्वयमपि विजिग्ये इत्यर्थः, विबुधकरिणः पत्युरिन्द्रस्य प्रणत्यापि कठिनाभ्यां विबुधकरिकुम्भद्वयजयत्यागरहिताभ्यामित्यर्थः । शेषं समानम् ॥ ८१ ॥

**पुरा जेतुमिति**—हे गिरिसुते ! पुरा पूर्वं रुद्रं शिवं जेतुं विषमविशिखः कामस्ते तव जङ्घे द्विगुणशरगर्भैः स्वयं पञ्चबाणत्वादेतावद्भिः शरैरजेयोऽयमिति द्विगुणावेव निजपञ्च-शरान् विधाय तद् गर्भौ निषङ्गौ तूणीरौ वाढं निश्चयेन अकृत कृतवान्। यदग्रे ययोरनङ्ग-निषङ्गतामापन्नयोर्जङ्घयोरग्रः पादयुगली नखा एव छद्म व्याजो येषां ते पादयुगली नखाग्र-छद्मानः दशशरफला दशसङ्ख्यकबाणा येऽग्रभागा दृश्यन्ते कीदृशाः सुरमुकुटशाणैक-निशिता नमस्कारसमये महेन्द्रादिमुकुटकोटिषु शाणाद् घर्षणात् एक निशिता मुख्यतया तीक्ष्णा इत्यर्थः।

**विष्णुपक्षे**—गिरिसुतायाः इः कामः ईः लक्ष्मीः वा यस्मादिति सम्बोधनपदार्थः, शेषं समानम्॥ ८२॥

**श्रुतीनामिति**—हे मातः ! श्रुतीनां वेदानां मूर्द्धानोन्तभागा उपनिषल्लक्षणा यौ तव चरणौ कर्मणी शेखरतया तत्त्वरूपेण दधति वहन्ति सर्वासां श्रुतीनां त्वच्चरणे तात्पर्यात् एतौ चरणौ ममापि शिरसि दयया करुणया धेहि निवेशय, ययोश्चरणयोः पाद्यं पाद्यरूपं पाथः जलं पशुपतिजटाजूटतटिनी गङ्गा तथा ययोश्चरणयोर्लाक्षालक्ष्मीर्यावकसम्पत् अरुणो रक्तो हरेर्विष्णोर्यश्चूडामणिर्मुकुटरत्नं तस्य रुचिर्दीप्तिरित्यर्थः।

**विष्णुपक्षे**—मात इत्यत्र मा अत इति छेदः; दयया अधेहि इति छेदः; अतो हेतोः ममापि शिरसि मा अधेहि अपि तु धेहि इत्यर्थः। ममापि शिरसि मातः परिमानं प्राभुत इति द्विवचनान्तं वा ययोः पाद्यमिति वामनस्य तृतीयचरणोपरि ब्रह्मणा पूजार्थं यत्पाद्यमा-वर्जितं सैव गङ्गेति पुराणप्रसिद्धेः हरिरिन्द्रः, शेषं समानम्॥ ८३॥

**हिमानी हन्तव्यमिति**—हे जननि ! त्वत्पादौ समग्रगुणसम्पन्नौ न्यूनगुणं सरोजं जयत इति किं चित्रं न किमपीत्यर्थः। कीदृशं सरोजं हिमानी हन्तव्यं तुहिनसमूहेन नष्टकान्ती तव चरणौ तु हिमगिरेस्तदाक्रान्तावपि कटकसञ्चारेऽपि रुचिरौ अनुपहत-शोभौ तथा सरोजं निशायां रात्रौ निद्राणं मुद्रितं पादौ तु निशि रात्रौ परभागे दिने च विशदौ निर्मलौ। परभागेनेति पाठे रात्रौ परभागेन विरुद्धकान्तिसंसर्गेण विशदौ निर्मलौ रात्रेस्तमोबहुलत्वेन श्यामत्वात् चरणयोः सहजपाटलकान्तिविरुद्धत्वम् "परभागो भवे-द्वर्णद्वयसंसर्गजा रुचि" रित्यभिधानात्। तथा सरोजं परं केवलं लक्ष्म्याः श्रियः पात्रं भवति स्थितिस्थापनं भवति न तु तस्या दाने भोगे वा समर्थं त्वत्पादौ तु समयिनां तद् भक्तिमार्गप्रवेशिनां श्रियमैश्वर्यं सृजन्तौ ददानावित्यर्थः।

**विष्णुपक्षे**—जननिनां समस्तजीवानां जयतः पराजयतः त्वत्पादावुक्तलक्षणौ सरोजं चोक्तलक्षणमिति किं चित्रमित्यर्थः॥ ८४॥

**नमो वाचमिति**—तवास्मै पदद्वन्द्वाय नमो वाचं नम इति वचनं ब्रूमो वदामः कीदृशाय नयनयोः रमणीयाय लोचनानन्दजनकाय तथा स्फुटरुचिरसालक्तकवते स्फुटौ रुचिरसौ कान्तिद्रवौ यस्य तादृशालक्तकवत् इत्यर्थः। यदभिहननाय येन पदद्वन्द्वेनाभिहननम् "अशोकश्चरणघाताज्जायते पुष्पवत्तर" इति वचनात् दोहदरूपं ताडनं तस्मै स्पृहयते

स्पृहां कुर्वते प्रमदवनं लीलोद्यानं तत्र यः कङ्केलितरुरशोको वृक्षस्तस्मै "कङ्केलिः कामकेलिः स्यादशोको रक्तपुष्पकः" इति विश्वः । पशूनां जीवानामीशानः शिवोऽत्यन्तमसूयति मात्सर्यं करोति त्वच्चरणस्पर्शसुखं कथमन्येनापि लभ्यमित्याशयेनेति भावः ।

**विष्णुपक्षे**—स्फुटरुचिरसालक्तकवते प्रकाशमानकान्तिद्रवात्मकयावकयुक्ताय यस्य पदद्वन्द्वस्य अभिहननाय पल्लवद्वारा अधिककान्तिमन्यतया तिरस्काराय स्पृहयते अशोकवृक्षाय शिवः स्पृहयति कथमयं क्षुद्रो महाराध्यस्य भगवच्चरणद्वन्द्वस्य शोभां तिरस्कर्तुमुद्यत इत्याशयेनेति भावः ॥ ८५ ॥

**मृषाकृत्वेति**—तव चरणकमले भर्तारं शिवं ललाटे ताडयति सति तुलाकोटिक्वणैः नूपुरध्वनिभिः ईशानरिपुणा कामेन किलकिलितं शौर्येण गर्जितम्—"जितशात्रवदर्पस्य प्रतिज्ञापूरणीकृतः । वीरस्य गर्जितं सिंहनादः किलकिला तथा" । इति विश्वः । भर्तारं कीदृशं ? मृषा मिथ्या इव गोत्रस्खलनं त्वदन्यस्त्रीनामग्रहणं कृत्वा अथानन्तरं वैलक्ष्येण लज्जाकृतेन नमितं नम्रम्, ईशानरिपुणा कीदृशेन ? चिराद् बहुकालमारभ्य दहनकृतं शिवललाटलोचनानलसम्पादितं शल्यं दुःखमुन्मीलितं च तद्दूरीकुर्वता, उन्मीलितवतेति पाठे अविः कृतवता पूर्वं वैरस्य निष्क्रयं कुर्वतेत्यर्थः ।

**विष्णुपक्षे**—चरणकमले भृगोश्चरणाम्बुजेलमिन्द्रं लाति अनुगृह्णाति इति ललो विष्णुस्तमटति उपसर्पतीति ललाटा ईः लक्ष्मीस्तस्या भर्तारं विष्णुं त्वां ताडयति सति दहति प्रलयकाले जगदिति दहनो महारुद्रः तत्कृतमन्तः शल्यमपमानरूपम्, उन्मीलितवता ते तव ईशानरिपुणा भृगुणा, हे अतुल ! देवान्तरैरतुल्य आ सम्बोधने कोटिकाणैः कोटिशब्दैः किलकिलितं गर्जितं ललाटे भर्तारं, कीदृशं स्खलनं ? क्षमामार्गात् प्रच्यवरूपम्, अत्रास्मिन् भृगौ आगः अपराधं मृषा कृत्वा तवायमपराधो न भवतीति इत्यादिवचनेनापराधं शान्तिं कृत्वा अथानन्तरं वैलक्ष्येण मदीयकठिनहृदयाभिघातेन तव चरणकमलमतिकोमलव्यथितमिति विषादाद् विः कारण नमितं नम्रमित्यर्थः ।

अत्र पूर्वं भृगुः ब्रह्मविष्णुरुद्राणां मध्ये कः श्रेष्ठतम इति जिज्ञासितुं ब्रह्मणो निन्दां कृत्वा ततोऽपमानं प्राप्य रुद्रनिकटे गतः तेनालिङ्गितुमारब्धेन भवान् पिशाचादिसखः श्मशानवासी न मयालिङ्गनीय इति तन्निन्दामकरोत्, ततस्त्रिशूलेन रुद्रेणाभिहतो वैकुण्ठे लक्ष्म्या सह सुप्तस्य विष्णोर्वक्षसि चरणघातमदात् । ततो भगवता सबहुमानमहो कठोरे मदीये वक्षसि दुर्बलस्य तव पादस्य स्पर्शो महद्दुःखमुपजनयिष्यतीति अभिधाय तत्पादसंवाहनमारब्धं ततोऽति क्षमावन्तं लक्ष्मीकान्तमेव सर्वाधिकं भृगुरमन्यतेति पौराणिकी कथा ॥ ८६ ॥

**पदं त इति**—हे देवि ! ते तव पदं पादाग्रं कान्तीनां पदं स्थानम्, विपदामपदमस्थानम् । कठिना या कच्छपी तस्या यत्खर्परं पृष्ठकपालं तस्य तुलां साम्यं सद्भिः कथं नीतम् ? प्रपदस्यातिकोमलत्वादित्यर्थः । अकोमलत्वे च उपयमनकाले विवाहसमये दयमानेन दयाकुलेन मनसा कारणभूतेन पुरभिदा शिवेन बाहुभ्यामादाय दृषदि विवाहकर्मोचिते पाषाणे तत् प्रपदं कथं न्यस्तमित्यर्थः ।

**विष्णुपक्षे**—देवा अस्मिन् सन्तीति देवि सकलदेवाश्रयमिति प्रपदविशेषणं दृषदि रत्नसिंहासनरूपे उपयमनकाले दर्शनार्थमागतस्य विष्णोः अतिदयया रत्नसिंहासने प्रपदं शिवेन न्यस्तमित्याशयः ॥ ८७ ॥

**नखैरिति**—ते चरणौ दिव्यानां तरूणां कल्पवृक्षाणां हसत इव स्वस्य गुणाधिक्यादिति भावः । तरूणामिति कर्मणि षष्ठी । नखैः कीदृशैः? नाकस्त्रीणां स्वर्गाङ्गनानां करकमलसङ्कोचे हस्तपङ्कजमुकुलीकरणे शशिभिश्चन्द्रायमाणैः प्रणामसमये इति भावः । हासहेतुमाह—फलानीति किसलयकराग्रेण नवदलरूपहस्ताग्रेण स्वस्थेभ्यः स्वर्गस्थितेभ्यः अथ च धनादिमत्तया सुखितेभ्यः फलानि ददतां तरूणामित्यस्य विशेषणम्, चरणौ विशिनष्टि—दरिद्रेभ्यो दुर्गतेभ्यः भद्रां सम्पूर्णां श्रियं लक्ष्मीमनिशं निरन्तरमह्नाय झटिति ददतौ प्रयच्छन्तौ इत्यर्थः ।

**विष्णुपक्षे**—चण्डाः प्रचण्डाः फलदाने रुद्रादयो देवा अस्य भक्ताः सन्तीति चण्डी चासौ चरणश्चेति चण्डिचरणः तौ चण्डिचरणौ प्रौढफलददेवाश्रितावित्यर्थः । शेषं समानम् ॥ ८८ ॥

**कदा काल इति**—हे मातः! कथय विद्यार्थी सन् तव चरणनिर्णेजनजलं चरणक्षालनजलं कदा काले कस्मिन् काले पिबेयम्, कीदृशं? कलितः सङ्क्रान्तः प्रक्षालनवेलायामलक्तकरसो यस्मिन् तत् प्रकृत्या स्वभावत एव मूकानां वक्तुमशक्तानां कवितायाः काव्यस्य करणतया हेतुतया यज्जलं वाण्याः सरस्वत्या मुखकमलताम्बूलरसतां तत्सादृश्यमादत्ते गृह्णाति । यज्जलं मुखकमलताम्बूलरसतां वदनकमलताम्बूलरागशोभामादत्ते करोतीत्यर्थः इति केचित् ।

**विष्णुपक्षे**—मातः लक्ष्मीतः कलितोऽलक्तकरसो यत्र तदिति निर्णेजनजलविशेषणम् कौतुकेन लक्ष्म्या अलकरसो दत्त इत्यर्थः, मातः लक्ष्मीतः लक्ष्म्या दत्तं यज्जलं ताम्बूलं रसतां वाणीं आदत्ते इत्यनेनान्वयो वा, यदा सार्वविभक्तिकस्तसिः तदा माता लक्ष्मी वाणी मुखकमलताम्बूलरसतामादत्त इत्यर्थः । यद्वा आ मा अत इति पदच्छेदः । प्रकृत्या प्रकृतिरूपया भवान्या अमा सह वाणी सरस्वती मुखकमलताम्बूलरसतां यस्मादादत्ते अतो हेतोः कदा काले पिबेयमित्यर्थः ॥ ८९ ॥

**पदन्यासेति**—ते तव चरणयुगलं खे आकाशे अलमतिशयेन चरन्तः भवनकलहंसा न जहति न त्यजन्ति कीदृशाः? पदन्यासक्रीडापरिचयं चरणविन्यासलीलाभ्यासम् आ समन्तात् लब्धं मनो येषां ते आलब्धमनस इव चरणयुगलं, कीदृशं? सुभगस्य मनोहरस्य मणिमञ्जीरस्य रत्ननूपुरस्य यद्रणितं तस्य छलात् कपटात् स्वस्य चरणस्य विक्षेपे विन्यासे शिक्षामाचक्षाणं ब्रुवाणं । पुनः कीदृशं? चारुचरितं मनोज्ञसञ्चारं "चरितं तु चरित्रे स्यात् सञ्चारे व्रतकर्मणि ।" इति विश्वः । चारुचरिते इति पाठे सम्बोधनम् ।

**विष्णुपक्षे**—खविक्षेपकाले चारुचरिते उत्कृष्टगमनरूपचरिते शिक्षामाचक्षाणमित्यन्वयः । शेषं समानम् ।

**वस्तुतस्तु**—भवने श्रीचक्रपक्षे पूजायन्त्रे कलोऽव्यक्तमधुरः हंसः इति मन्त्रः कण्ठे येषां ते कलहंसाश्चक्रादिदेवतास्ते चरणकमलं चरणमज्ञानभक्षकं कमलं सङ्कोच-विकासशालि द्वैतप्रपञ्चजगद् अद्वैतात्मकब्रह्मरूपद्वैताद्वैतपदद्वन्द्वमिति कुलामृतवचनात् न जहति न त्यजन्ति पदानि स्थानानि चतुर्दशभुवनानि तेषां न्यासः सृष्टिः क्रीडा रक्षापरिचयः संहारः आलब्धं कर्तुं मनो येषां ते तथा सृष्ट्यादिकरणसामर्थ्य-प्राप्त्यर्थं त्वच्चरणोपासनं कुर्वन्तीत्यर्थः । खे हृदयाकाशे त्वच्चरणं चरन्तः आस्वादयन्तु ध्यायन्त इत्यर्थः, शोभनश्चावविक्षेपश्च क्षेपश्चेति स्वविक्षेपो निर्विकल्पकरूपं ब्रह्मज्ञानं तस्मिन् शिक्षामाचक्षाणम् । कीदृशे ? चारुचरिते मोक्षदानरूपशोभनचरित्रयुक्ते ।

भवानीपक्षे—सम्बोधनपदमिदम् । सुष्ठु भग ऐश्वर्यमस्यास्तीति सुभग ईश्वर मणिवत् मञ्जु करोतीति मञ्जी जीवः ढ्लिोपेन्द्र रन्प्रत्ययान्तमिदम् । तयोर्जीवेश्वरयोरणितं व्याख्यानं तच्छलात् तथा च तत्त्वमस्यादिवाक्येन जीवब्रह्मणोरैक्यच्छलाज्जहदजहल्लक्षणया निर्वि-कल्परूपं ब्रह्मज्ञानमाचक्षाणं द्वैताद्वैतरूपं त्वच्चरणद्वयं सृष्ट्यादिकरणसामर्थ्यलाभार्थं त्वद्भक्ता न त्यजन्ति इत्युभयपक्षेऽप्यर्थः ।

**भवानीपक्षे**—भवनकलहंसाः श्रीचक्रस्था देवताः पञ्चाशत्सङ्ख्यकाः; तथा हि—प्रथमं गुरुचक्रेश्वरः, ततो गणपतिः सर्वद्वारनिविष्टः, ततो नानावृक्षमहोद्याने कालनाथः, चतुर्द्वार-पालको दीपनाथः । कल्पतरुवाटिकायां वसन्तः, सन्तानवाटिकायां ग्रीष्मनाथः हरिचन्दन-वाटिकायां वर्षानाथः, मन्दारवाटिकायां शरदृतुनाथः, पारिजातवाटिकायां हिमर्तुनाथः, कदम्बवाटिकायां शिशिरर्तुनाथः तत्रैव श्यामाम्बा, पुष्परागवाटिकायां मृत्युञ्जयनाथः, पद्मरागवाटिकायामम्बादेवी, गोमेदवाटिकायां श्रीकालसङ्कर्षणी, हीरक्तरुवाटिकायां विश्वावसुगन्धर्वपतिः, वैदूर्यवाटिकायामनन्तनाथः, हरितमणिवाटिकायां वेदमाता गायत्री, मुक्तामणिवाटिकायां पूर्वभागे देवेन्द्रनाथः, तस्या दक्षिणे भगवान् वैश्वानरः, तस्या याम्याशायां यमनाथः, तस्या दक्षिणपश्चिमे निर्ऋतिनाथः, तस्याः पश्चिमे वरुणनाथः, तस्या वायव्ये मारुतनाथः, तस्या उत्तरे कुवेरनाथः, तस्याः प्रागुत्तरभागे रुद्रः, देवताल-वाटिकायां वार्ताली, विद्रुमवाटिकायां ब्रह्मनाथः, माणिक्यमण्डपे श्रीमहाविष्णुः, सहस्र-स्तम्भमण्डपे शम्भुनाथः, अमृतवाटिकायां तारादेवी, आनन्दवाटिकायां वारुणीदेवी, विमर्षणवाटिकायां कुरुकुल्लादेवी, बालातपच्छायायां मार्तण्डभैरवः, चन्द्रिकोद्गरकछायायां सोमनाथः, शृङ्गारपरिखायां मन्मथनाथः, महापद्माटव्यामन्नपूर्णा, चिन्तामणिगृहराज-प्राग्द्वारे दुर्गाभट्टारिका, महामञ्चाधस्तात् श्रीबालाम्बिका, चिन्तामणिगृहराजपरितो महा-शम्भुनाथः, चिन्तामणिगृहपूर्वद्वारे अमृतेश्वरी, चिन्तामणिगृहराजलिपिकापीठे श्रीपूर्ण्यम्बा, चिन्तामणिगृहराजपूर्वोत्तरमणिधिष्ठ्ये मन्त्रचक्रमातङ्गी, तस्यैव दक्षिणभागमणिधिष्ठ्ये मन्त्रचक्रवाराही, चक्रराजमहारथशृङ्गे सतानननाभट्टारिका, श्रीचक्रस्थाने श्रीमेश्वर-भट्टारकः ॥ ९० ॥

**ददान इति**—दीनेभ्यो दरिद्रेभ्य आशानुसदृशीं श्रियं लक्ष्मीं ददाने प्रयच्छति सति अमन्दं भूयिष्ठं सौन्दर्यस्तवकमकरन्दलावण्यसमूहमधुरसंविकिरति मन्दारस्य सुरतरुविशेषस्य स्तवको गुच्छस्तद्वत्सुभगे शोभने अस्मिन् तव चरणे निमज्जन् निलीयास्वादरसमनुभवन् मल्लक्षणो जीवो जीवात्मा करणचरणैः मनःसहितश्रोत्रादिज्ञानेन्द्रियात्मकैश्चरणैः पादैः षट्चरणतां षट्पदत्वं यातु इत्यर्थः । विष्णुपक्षेऽप्येवम् ॥ ९१ ॥

**अरालेति**—केशेषु अरालवक्रा, मन्दहसिते ईषद्धासे प्रकृत्या स्वभावेन सरला ऋज्वी, गोत्रे शरीरे शिरीषाभा शिरीषकुसुमवत्कोमला, कुचतटे स्तनाभोगे दृषदिव शिलेव कठोरा कठिना मध्ये उदरे भृशमतिशयेन तन्वी कृशा वरस्य श्रेष्ठस्य आरोहस्य नितम्बस्य विषये स्थाने पृथुः प्रथिमगुणयुक्ता "आरोहजघनं श्रोणी नितम्बः स्त्रीकटीतटे ।" इति विश्वः । एवं भूता महेशस्य शम्भोः करुणा भवानीरूपा अरुणा आरक्तवर्णा काचिदनिर्वचनीया जगद्भुवनं त्रातुं रक्षितुं जयतीत्यर्थः ।

**विष्णुपक्षे**—शं कल्याणं भवत्यस्मादिति शम्भुर्विष्णुस्तस्य करुणा जयति, कीदृशी ? अकेशेषु को ब्रह्मा ईशः शिवः तद्विरुद्धेषु अरालवक्रा अमन्दमस्वल्पं हसितमुपहासो यस्मात्सोऽमन्दहसितो नारदस्तस्मिन् प्रकृतिसरला स्वभावतो ऋज्वी अं विष्णुं गायन्त्यागा वैष्णवास्तान् आ समन्तात् त्रायते रक्षति इत्यगात्रो वैष्णवरक्षकं यद्वा न गच्छति न नश्यति इत्यगो वेदस्तमाशु मन्त्रं त्रायते रक्षतीत्यगात्रो ब्राह्मणस्तस्मिन् शिरीषवत् कोमला, शिरीषाभा चित्र इति पाठे अकारप्रश्लेषः तेन अकारो विष्णुस्तद्विषयिकी चिन्ता यस्य तस्मिन् वैष्णव इत्यर्थः । कामिन्या कुचौ तटे निकटे यस्यासौ कुचतटः कामी तस्मिन् दृषदिव कठोरा, वरं तपस्विनं आरोहन्तीति वरारोहा दैत्याः तेषु भृशं तन्वी स्वल्पा, ई मध्ये लक्ष्म्या उपरि पृथुर्वहुला काचित् "कश्चात्मनि समाख्यातः" इत्येकाक्षरकोषात् क आत्मा तद्विषयकमविद्ज्ञानं यस्य वा तस्मिन् देहात्मवादिनि अरुणा अननुकूलेत्यर्थः ॥ ९२ ॥

**पुराराते रिति**—पुराराते: शिवस्य त्वमन्तःपुरं प्रधानमहिषी असि भवसि, ततो हेतोः तरलकरणानामजितेन्द्रियाणां तव चरणयोः अमर्यादा सम्पूर्णा सपर्या पूजा, सपर्यायाः पूजायाः मर्यादा निष्ठेति वा असुलभा दुष्प्रापा दुःसाध्येति यावत्, तथापि सम्पूर्णपूजाया अभावेऽपि असम्पूर्णपूजयैव एते तरलकरणारम्भादि परीरम्भादि सम्भावितहृदयाः शतमखमुखा इन्द्रादयोऽमरा देवास्तव द्वारोपान्तस्थितिभिस्त्वदीयचिन्तामणिगृहराजस्यान्तिमकक्षानिविष्टाभिः अणिमाद्याभिर्दशभिः सिद्धिभोगैश्वर्यसम्पदम् अतुलमतिशयितां नीताः प्रापिता इत्यहो त्वत्पूजामाहात्म्यप्रकर्ष इत्यर्थः ।

**विष्णुपक्षे**—अन्तःपुरमन्तःपुरे अन्तःपुररूपा वा मा लक्ष्मीर्यस्य स तथा सितत इत्यन्यत्र प्रथमायां तसिः तेन सिता श्वेता सात्विकी त्वच्चरणयोः सपर्या मर्यादा तरलकरणानामिन्द्रादीनां पुरनामकदैत्यभेदनभर्तुः शिवस्य अप्यसुलभा । यद्वा पुराणां जाग्रत्स्वप्नसुषुप्त्यवस्थारूपाणामरातेर्नाकस्य तव द्वारोपान्तस्थितिभिः इत्यनेनान्वयः । अथवा त्वच्चरणया सिततः सत्त्वप्रधाना सपर्यामर्यादा तरलकरणानां भोगैकलपनानामिन्द्रादीना-

मरातेः प्रह्लादस्य पुरा असुलभा प्राणैर्लभ्या जाता तथापि शतमखमुखा अमरा अणिमाद्याभिः सिद्धिं नीताः सम्पूर्णकलावाप्तिर्यद्यपि प्रह्लादस्य तथापीन्द्रादीनामसात्त्विकेन रासेनाराधनेनाणिमादिसिद्धिजातैवेत्यर्थः ॥ ९३ ॥

**गतास्ते मञ्चत्वमिति**—द्रुहिणो ब्रह्मा सृष्टिकर्ता, हरिर्विष्णुः स्थितिकर्ता, रुद्रः संहर्ता, ईश्वरस्तिरोधानकृत् एतैश्चतुर्भिः पादरूपैः भृतो धारितः शिवः सदाशिवोऽनुग्राहकस्ते तव मञ्चत्वं गताः, कीदृशः? स्वच्छायया शुभ्रच्छायया घटितकपटेन छलेन प्रच्छदपटः आस्तरणरूपः सदाशिवस्य कशिपुरूपत्वात् एतादृशो दृशां सुखं दोग्धि ददाति, क इव? त्वदीयानां त्वदङ्गसम्भूतानां भासामारक्तकान्तीनां प्रतिफलनलाभेन अरुणतया पाटलवर्णतया शरीरीकृतदेहपरिग्रहः शृङ्गारस इवेत्यर्थः । तदुक्तं रुद्रयामले—"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते पञ्च महाप्रेता भूताधिपतयो मताः ॥ चत्वारो मञ्चचरणा पञ्चमः प्रच्छदः पटः । सच्चित्प्रकाशिरूपेण शिवेनाभिन्नविग्रहाः ॥ तत्रासने समासीना निर्भरानन्दरूपिणी"ति शृङ्गाररसस्य श्यामत्वं सङ्गीतशास्त्रे । "शृङ्गारः शुचिरुज्ज्वल" इत्यादिना शुक्लत्वं कोशे यद्यप्युक्तं तथाप्यनुरागप्रधानरजोगुणमयत्वात् अरुणतयात्रवर्णनमित्यवगन्तव्यम् ।

**विष्णुपक्षे**—शिवो गुणत्रयरहितः शुद्ध आत्मा तव मञ्चत्वं क्रीडास्थलत्वं गतः आत्मारामत्वाद्, भवत स आत्मा कीदृशः द्रुहिणहरिरुद्रेश्वरमृतः हरिरिंद्र एभिर्देवैर्हृदये ध्यानावस्थायां भृतो धृतः, पुनः कीदृशः? स्वच्छायाऽनादिवासनारहितया छायया बुद्ध्या अघटितोसम्बद्धः कपटो माया तद्रूप आवरकत्वात्प्रच्छदपटो यस्य स तथा शुद्धस्य मायारहितत्वात् त्वदीयानामीश्वरसम्बन्धिनीनां मायारूपाणां भासां बुद्धीनां प्रतिफलनलाभात् अरुणितो जगत्कर्तृत्वाद्यभिमानत्वात् अत एव शुद्धचैतन्यस्य मायात उत्प्रेक्षते–शरीरी शृङ्गार इति अरूपोऽपि दृशां कुतुकं दोग्धि रूपवानिव भवतीत्यर्थः ।

अथवा शिवो महेशः स्वच्छच्छायाघटितकपटप्रच्छदपटः श्वेतकान्तिकान्तप्रच्छदपटरूपः अत एव मञ्चत्वेनोक्तः । त्वदीयानां मालां श्यामकान्तीनां प्रतिफलनलाभेन अरुणतया सूर्यतया प्रकाशकतयेति यावत्, शरीरी शृङ्गारो रस इवेति शृङ्गारस्य श्याममूर्तित्वादिति भावः ॥ ९४ ॥

**कलङ्क इति**—कलङ्को लाञ्छनं, कस्तूरी मृगमदः, रजनिकरबिम्बं चन्द्रमण्डलं जलमयं जलस्वरूपमत एव मरकतकर......मतिगभीरस्य जलस्य हरिद्वर्णोपलब्धिः, कलाभिः षोडशसङ्ख्यैः कर्पूरैरेव घनसारखण्डैर्निविडितं भरितम् ।

**कृष्णपक्षे**—त्वद्भोगेन ताम्बूलास्वादरूपेण प्रतिदिनं प्रत्यहं रिक्तकुहरं शून्याभ्यन्तरं विधिः ब्रह्मा ताम्बूलकरण्डवाहको भूत्वा सेमानः भूयोभूयः प्रतिशुक्लपक्षं कलान्तरकर्पूरखण्डानादाय तव कृते त्वदर्थं नूनं निश्चितं निविडयति इत्युभयसाधारणोऽर्थः ।

वस्तुतस्तु—कलङ्कः अङ्कश्चिह्नं विन्दुचक्ररूपं "कलङ्कोऽङ्कापवादयोः" इत्यमरः । तदेव कस्तूरी वासना वैन्दवचक्रवासनया वासितस्यैव चक्रान्तरस्य सर्वसिद्धिप्रदत्वात् । तदुक्तं योगिनीहृदये—"शून्याकाराद्विसर्गान्ताद्विन्दुप्रस्यन्दसंविदः ।। प्रकाशप्रशमार्थत्वास्स्फुरत्ता-

लहरी युतात् ॥ प्रसृतं विश्वलहरी स्थानमातृत्रयात्मकम् । वैन्दवं चक्रमेतस्य त्रिरूपञ्च पुनर्भवेत् ॥ धर्माधर्मौ तथात्मानौ मातृमेयौ तथा प्रमा । नव योन्यात्मकं चक्रं चिदानन्दकरं महदिति ।" पुनः कीदृशं जलमयं रजनिकरविम्वममृतमयचन्द्रमण्डलरूपम् "मध्ये त्रिकोणममृतं परमामृता ईमिति, उक्तेः अमृतवीजवकारात्मकमिति वाऽर्थः । रिक्तकुहरम्–रिक्तः शून्यः विसर्गः कुहरे रन्ध्रे मध्ये यस्य तत्, अतः आकारमारभ्य कलाविन्द्वन्तमीश्वरैस्तदधिष्ठातृ-कामैश्वर्यादिदिनतिथिरूपपञ्चदश-नित्याभिः कपूरैः चक्रान्तरवासकैर्निविडितं वेष्टितं मरकत-करण्डमिति विन्दुचक्ररूपकमिदम् विन्दुचक्रं त्वद्भोगेन त्वच्छरीरभूतेन एकैकनित्यात्मना प्रतिदिनं प्रतितिथौ विधिर्विधिवाक्यं त्वदर्चनार्थं भूयो भूयो निबिडयति योजयति ।

अयं भावः—पञ्च पञ्च स्वरयुक्तः, त्रिकोणे रेखात्रये प्रत्यहं कामैश्वर्यादिचित्रान्तानां नित्यानां मध्ये विसर्गे सुन्दर्याश्च पूजनं पुनर्मध्येऽनुलोमविलोमक्रमेण शुक्लकृष्णपक्षयोः कामैश्वर्यादिचित्रान्तानां चित्रादिकामैश्वर्यान्तानां तत्तत्तिथावेकैकस्या एव पूजनमित्युक्तेः । अत्रेऽति भवानीपक्षेऽर्थः ॥ ९५ ॥

**स्वदेहेति**—हे नित्ये ! स्वदेहोद्भूताभिः त्वच्छरीरोत्थाभिः घृणिभिः किरणरूपाभि-रणिमाद्याभिरावरणदेवताभिरभितो निषेव्यां सेव्यमानां त्वामहमिति अभेदेन भावयति निषेव्यामित्यत्र 'निषेव्ये' इति क्वचित्पाठः तत्र हे अणिमाद्याभिः निषेव्ये सेविते इति सम्बोधनम्, त्रिनयनस्य शिवस्य समृद्धिरैश्वर्यं तृणयतः तृणवन्मन्यमानस्य तस्य महा-संवर्ताग्निः प्रलयकालाग्निर्नीराजनविधिं विरचयति इति किमाश्चर्यं नाश्चर्यमित्यर्थः । तदुक्तं कादिमते—"त्वद्देहोत्थिततेजोभिः किरणैरणिमादिभिः । आवृतां त्वां महति भावयेस्त्वत्समो भवेदिति ।" दत्तात्रेयोऽप्याह—"अरुणां करुणातरङ्गिताक्षीं धृतपाशाङ्कुशपुष्पवाणचापाम् । अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम् ।" इति ।

**विष्णुपक्षे**—हे निषेव्य ! सेवनयोग्य आमिति सम्बोधने स्वदेहः परमेश्वरस्य देहो वेदस्तस्मादुद्भूताभिः घृणिभिः तेजोभिरणिमाद्याभिरणिमादिसंज्ञकाभिर्ऋगादिरूपाभिर्गोपीभिः सह त्वामहमित्यभेदेन यः सदा भावयति नित्यं नित्यरूपं यद् ब्रह्म तन्निमित्तं त्रिनयनस्य शिवस्य भिक्षुकत्वात् तत्समृद्धिं भिक्षारूपां तृणयतस्तुच्छीकुर्वत स्तस्य महासंवर्ताग्निरपि नीराजनं विरचयति तस्य भिक्षा प्राप्त्या जठरानलज्वालाजन्यदुःखोपशमनस्वल्पफलं प्रलयकालीनानलज्वालाजालोऽपि न दुःखमुपजनयतीति भावः । तदुक्तं क्रमदीपिकायाम्— "द्विजो भिक्षावृत्तिं य इह दिनशो नन्दतनयः स्वयं भूत्वा भिक्षामटति विहरन् गोपसु-दृशाम् ॥ अमाचेतोभिः स्वैर्ललितललितैर्नर्मविधिभिः दधिक्षीराज्याभ्यां प्रचुरतरभिक्षां स लभते ॥" इति ॥ ९६ ॥

**समुद्भूत इति**—उमे ये विमलाः पुरुषाः भवत्यां भक्ता अमीषामुरः वक्षःस्थलं समुद्भूतस्तनभरं समुद्भूत उत्तुङ्गतयोद्गतया उद्गततया उद्गतः स्थूलः परिणाहवत् स्तनभरो यत्र ततो हसितं स्मितं चारु मनोहरं कटाक्षेऽपाङ्गप्रदेशे कतिचन कतिपये कन्दर्पाः कामाः

वपुः शरीरं कुसुमितकदम्बद्युति प्रफुल्लकदम्बाकारं रोमाञ्चयुक्तमित्यर्थः इयं परिणतिः परिणामः त्वद्भक्तास्त्वद्रूपा भवन्तीति भावः । अतो हरस्य शिवस्य मनसि चित्ते मदनः कन्दर्पस्त्वद्भ्रान्तिं त्वद्भ्रमं जनयामास, स्मरहरोऽपि त्वद्भक्तान् त्वदाकारान् दृष्ट्वा विषमशरविह्वलाङ्गी भवतीति भावः ।

**विष्णुपक्षे**—भवति त्वयि आ स्मरणे, भवती कीदृशे ? उमे उत्कृष्टा मा प्रमा तत्त्वज्ञानरूपा यस्मात्तस्मिन् उत्कृष्टप्रमाजनकस्यापि शिवमनसि भ्रमजनकत्वेन विरोधालङ्कारः अमीषां भक्तानामुरो वक्षस्थलं स्थूलस्तनस्य भरो भारो यस्यासौ स्थूलस्तनभरः कौस्तुभः समुद्भूतं व्यक्तं स्थूलस्तनभरं कौस्तुभं यत्र समुद्भूतस्थूलस्तनभरं, यद्वा समुद्भूतः स्थूलोऽतिशयितः स्तनः शब्दः ख्यातरूपो यस्यासौ समुद्भूतस्थूलस्तनः श्रीवत्साङ्क स्तं विभर्त्तीति समुद्भूतस्थूलस्तनभरमित्यर्थः । शेषं समानम् ॥ ९७ ॥

**कलत्रमिति**—हे सति ! दक्षदुहितर्न केवलं नाम्ना त्वं सतीमचरमे पतिव्रतानां प्रधानभूते वैधात्रं विधातृसम्बन्धि कलत्रं सरस्वती कति कवयो न भजन्ति न कलत्री कुर्वन्ति यत्किञ्चित्कवित्वेनैव सरस्वतीवल्लभत्वम् । श्रियो देव्या लक्ष्मीदेव्यापतिः कैरपि किञ्चिन्मात्रैरपि धनैः को वा न भवति तव कुचाभ्यां पयोधराभ्यामासङ्गः परिष्वङ्गः महादेवं हित्वा शिवं विहाय कुरवकतरोरपि उत्तमाङ्गनालिङ्गनदोहदिनो वृक्षस्यापि असुलभो दुर्लभ इत्यर्थः ।

**विष्णुपक्षे**—कलत्रमित्यादिना सरस्वत्या पुमन्तरसम्बन्धमुक्त्वा लक्ष्म्यास्तदभावमाह—श्रिय इति श्रियो देव्या पितः कैरपि धनैरेव न तु वक्ष्यमाणालिङ्गनादिना महादेवं श्रेष्ठदेवं हि निश्चितं त्वां त्वामलक्ष्मीकृत्य हे अतसवर्गवसति ! सतीनां वसतौ गृहे सतीनां विद्यमानानां मध्ये अचरमा श्रेष्ठा या ई लक्ष्मीस्तस्याः कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः तथा च त्वत्समो नान्य इति भावः ।

अथवा वैधात्रं कलत्रं सरस्वतीं कति कवयो न भजन्ते तस्याः को वा ब्रह्मा वा पतिर्न भवति, अपि तु भवत्येव तथा च सरस्वत्या अपि पतिद्वयम्, श्रियो लक्ष्म्याः कैरपि धनैः कौस्तुभादिभिः सह कुचाभ्यामासङ्गः महादेवमपि हित्वा तवैव नान्यस्य कीदृशः कुरवकतरोरप्यसुलभः ।

ननु लक्ष्म्यास्त्वदतिरिक्तानुरागो नास्तीत्यत्र किं विचित्रमत आह—देव्या दिवु क्रीडाद्यर्थधात्वर्थानुसारात् कान्तिशालायाः क्रीडावत्या गतिशालिन्याश्चञ्चलाया वा चरमे सति चरमे वयसि वार्द्धके सति सतीर्नमसतीति संज्ञो भवतीत्यर्थः । क्रीडादिशालिन्या अलक्ष्म्या अपि स्थैर्यं त्वय्येवेति त्वत्प्रभावोत्कर्ष इत्याशयः ॥ ९८ ॥

**गिरामाहुरिति**—हे परब्रह्ममहिषि ! महेशपत्नि महामाये अनाद्यविद्यारूपे द्रुहिणो ब्रह्मा तस्य गृहिणीं पत्नीं गिरां देवीं सरस्वतीं त्वामागमविदो वेदविद आहुः, हरेर्विष्णोः पत्नीं श्रियं पद्मां लक्ष्मीमाहुः, हरसहचरीं शिवसहधर्मिणीमद्रेर्हिमालयस्य तनयां पुत्रीमाहुः । स्वमतमाह-त्वं काप्यनिर्वचनीया तुरीया सरस्वत्याद्यतिरिक्ता दुरधिगमो दुर्ज्ञेयः निःसीममहिमा

निःसीमोऽपर्यन्तः महिमा प्रभावो यस्याः सा दुरधिगमनिःसीममहिमा विश्वं प्राणिजातं भ्रमयसि स्वकीयनानारूपं प्रदर्श्य तेन सरस्वत्यादि बुद्धिमन्तं करोषीत्यर्थः ।

अथवा गिरां देवीमैंकाररूपां पञ्चदशी वाग्भवकूटरूपां वा आगमविदस्तान्त्रिका हरेः पत्नीं श्रीबीजरूपां पञ्चदशी तृतीयकूटरूपां वा पञ्चदशीकूटत्रयस्य ब्रह्मविष्णुशिवाधिष्ठितत्वात तुरीया ईकाररूपा तुर्यान्तैरन्तमापायेति तन्त्रराजोक्तत्रयोदशाक्षरतुरीयकूटरूपावेत्यर्थः ।

**विष्णुपक्षे**—हे महामाये ! महामाया ई लक्ष्मीर्यस्येत्यर्थात् "एङ् ह्रस्वादि"ति सुलोपः । त्वां सरस्वतीं लक्ष्मीं भवानीञ्चागमविदो वदन्ति स्त्रीरूपोऽपि त्वमेवेत्यर्थः । वस्तुगत्या कापि दुरधिगमनिःसीममहिमा तुरीया जाग्रत्स्वप्नसुषुप्त्यवस्थातिरिक्तावस्था त्वं विश्वं जगत भ्रमयसि नानात्वेन दर्शयसि, कीदृशं जगत्? परब्रह्मैव महिषोवाहनमाधार उपादानकारणं यस्य तत्परब्रह्ममहिषि महिषवाहनत्वेन संसारस्यापि वर्णनात् तस्य यमसदृशभयदायकत्वं सूच्यते ॥ ९९ ॥

**सरस्वत्येति**—त्वद्भजनवान् त्वद्भक्तः सरस्वत्या गद्यपद्यादि रूपाया विद्यया लक्ष्म्या धनसमृद्ध्या विहरते क्रीडति, विधेः ब्रह्मणो हरेः विष्णोः समानपत्नीकः सन् रम्येण शोभनेन वपुषा शरीरेण रतेः कामपत्न्या पातिव्रत्यं शिथिलयति दूरीकरोति, चिरजीवन्नेव ब्रह्माद्यनुल्लङ्घनीयं कालमुल्लङ्घ्यवर्तमान एव क्षपितो दूरीकृतः, पशुपाशानां पुत्रकलत्रादीनां व्यतिकरः सङ्गो येन स तथा यद्वा क्षपिताः पशूनां पाशा घृणा शब्दादयः तेषां व्यतिकरो येन तथाभूतः सन् परब्रह्माभिख्यं रसं परब्रह्म नाम रसं "रसो वै सः" इति श्रुतेः रसयति आस्वादयतीत्यर्थः, तदुक्तं कुलचूडामणौ—"घृणा शङ्का भयं लज्जा जुगुप्सा चैव पञ्चमी । कुलं जातिश्च शीलञ्च अष्टौ पाशाः प्रकीर्तिताः ॥ एतैः पाशैर्विरहितो निर्विकारो जितेन्द्रियः । विश्वव्याप्तिमहाज्ञानं क्रमेण पुरुषोऽश्नुते ॥" विष्णुपक्षे हरिरिन्द्रः, शेषं समानम् ॥ १०० ॥

**निधे इति**—निधीयते जगदस्यामिति निधिः तेन जगदाधारभूत इत्यर्थः, नित्यस्मेरे नित्यस्मितोल्लासवदने जीवानां मिथ्याभूतजगदावेशनिरीक्षणस्मितकारणं, ननु जगदाधारता शरीरस्य स्मितयोगश्च शरीरिण इति परस्परविरुद्धं कथमेकत्र त्वयीति अत आह—निरवधिगुणे भक्तानुग्रहाय नानारूपगुणाविष्कारेण सर्वमुपपद्यते तवेति भावः । ननु यदि भक्तानुग्रहाय शरीरादिपरिग्रहस्तत्कथं कश्चिद्राजा कश्चित्तपस्वीत्यादि भक्तेषु नातिरम्यमित्यत आह—नीतिनिपुणे भक्त्यनुकूलफलदानदक्षे, तर्हि कर्मपरतन्त्राहमित्यत आह—निराघातज्ञाने निराघातमप्रतिहतमन्यानधीनं ज्ञानमनुग्रहाय यस्या, ननु स्वातन्त्र्येऽपि क्वचित्स्वल्पफलदातृत्वं क्वचिद् बहुफलदातृत्वं तवेति कथं वैषम्यमित्यत आह—नियमपरचित्तैकनिलये ध्यानपूजादिनियमपरचित्तमात्रस्थिते, तर्हि नियमपारतन्त्र्यमेवागतमत आह—नियत्यानिर्मुक्ते नियमादिजन्यादृष्टानपेक्षे एतादृश्यां मयि किं प्रमाणमत आह—निखिलनिगमान्ताः सकलवेदान्ता उपनिषद्भागा एव स्तुतिपदानि श्रुतिस्थानानि यस्याः सकलवेदान्तैस्त्वमेव प्रतिपाद्यसे नोपनिषद्भागा एव त्वयि प्रमाणतममिति भावः । 'स्तुतपदे' इति पाठे वेदान्तैः स्तुतं पदं चरणौ यस्या इत्यर्थः । केन प्रकारेण स्तुतपदेत्यत आह—निरातङ्के निर्गत आतङ्को

बन्धजनिता भीतिर्यस्या नित्यकालत्रयाबाध्ये ममापि इमां स्तुतिं निगमय निगमीकुरु "तत्करोत्यर्थे णिच्।" वेदमिव सर्वसम्प्रतिपन्नां कुरु इत्यर्थः।

**विष्णुपक्षे**—हे निधे! भक्तानां निधिस्वरूपे अन्यानि पदानि सप्तम्यन्तानि तेन नित्यस्मेरत्वादिगुणयुक्ते त्वयि विषये इमां स्तुतिं निगमय वेदवदादरणीयां कुर्वित्यर्थः ॥ १०१ ॥

मम स्तुतिमित्यनेन प्राप्तं स्वकर्तृकत्वं स्तुतेरपाकरोति—

**प्रदीपज्वालाभिरिति**—हे वाचां जननि मातृकारूपे! त्वदीयाभिरेव वाग्भिः तव स्तुतिरियं न मद्वाग्भिरित्यर्थः। यथा प्रदीपज्वालाभिर्दिवसकरस्य सूर्यस्य नीराजनविधिरारार्तिकविधानम्, न हि सकलभुवनान्तर्वर्तिध्वान्तध्वंसकस्य भगवतो मार्तण्डस्य प्रदीपज्वालाभिः प्रकाश इत्यर्थः। सूधासूतेश्चन्द्रस्य चन्द्रोपलजललवैश्चन्द्रकान्तपानीयविप्रुषैरर्घ्यघटना अर्घ्यदानं स्वकीयैर्निजैरम्भोभिर्जलैः सलिलनिधेः समुद्रस्य सौहित्यकरणं तृप्तिसम्पादनम् "सौहित्यं तर्पणं तृप्ति"रित्यमरः। अत्र 'यथा' शब्दाभावेऽपि प्रदीपेत्यादीनां दृष्टान्तता निदर्शनालङ्काररीत्या "तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्" इतिवत्।

**विष्णुपक्षे**—जनमस्यास्तीति जननी जीवः जननिनां जीवानां वाक् वचनं तासां जननिवाचां मध्ये इयं स्तुतिस्त्वदीयाभिरेव वाग्भिः अन्तर्यामितया त्वयैव निर्मिता मन्मुखान्निःसरणमात्रमेवैतस्या इत्यर्थः। जननीति पूर्ववद् विष्णुपक्षे सम्बोधनं वा ॥१०२॥

अर्थं मदीयमवलोक्य ततो ह्यसम्यगर्थान्तरं समधिगम्य निनिन्द्यमेतत्।
अत्यन्तदुर्गमतरे पथि सञ्चरन्तः, श्लाघ्या भवन्ति कवयः पुरतः प्रयाताः।
भेदो न ते जननि जातु जनार्दनेन, वैकुण्ठनाथपरतापि कृतात्र तेन।
मातर्भवानि! करवाणि तथापि काकुं मा कुण्ठितोऽस्तु मयि ते करुणाकटाक्षः॥

**इति श्रीमहाभागवतश्रीनरसिंहस्वामिकृतं शक्तिविष्णुपरकं श्रीसौन्दर्यलहरीभाष्यं सम्पूर्णम्॥**

चैत्र शुक्लचतुर्दश्यां गुरुवासरे सं० २००२ वैक्रमे लिखितम्। श्रीपीताम्बरायै समर्पितम्।

---